तद्यथा ।

मञ्जुश्रिया च कुमारभूतेन बोधिसत्त्वेन महासत्त्वेन । अवलोकितेश्वरेण च महास्थामप्राप्तेन च । सर्वार्थनाम्ना च नित्योद्युक्तेन च । अनिक्षिप्तधुरेण च रत्नपाणिना च । भैषज्यराजेन च । भैषज्यसमुद्गतेन च । व्यूहराजेन च । प्रशान्तशूरेण च । रत्नचन्द्रेन च । पूर्णचन्द्रेन च । पूर्णचन्द्रेण महाविक्रामिणा च । अनन्तविक्रामिणा च । त्रैलोक्यविक्रामिणा च । महाप्रतिभानेन च । सततसमिताभियुक्तेन च । धरणीधरेण च । अक्षयमतिना च । शान्तमतिना च । नक्षत्रराजेन च । रत्नवैरोचनेन च । मैत्रेयेन च । बोधिसत्त्वेन महासत्त्वेन । सिंहेन च बोधिसत्त्वेन महासत्त्वेन । भद्रपालपूर्वङ्गमैश्च षोडशभिः सत्पुरुषैः सार्द्धम् ॥

तद्यथा ।

भद्रपालेन च । रत्नाकरेण च । सुसार्थवाहेन च । नरदत्तेन च । गुह्यगुप्तेन च । वरुणदत्तेन च । इन्द्रदत्तेन च । उत्तरमतिना च । विशेषमतिना च । वर्द्धमानमतिना च । अमोघदर्शिना च । सुसंप्रस्थितेन च । सुविक्रान्तविक्रामिणा च । अनुपममतिना च ॥ सूर्यगर्भेण च । धरणींधरेण च । एवं प्रमुखैरशीतिभिर्बोधिसत्त्वसहस्रैः सार्द्धं शक्रेण च देवानामिन्द्रेण विंशतिदेवपुत्रसहस्रपरिवारेण ॥

तद्यथा ।

चन्द्रेण च सूर्येण च समन्तगन्धेन च । रत्नप्रभेण च । अवभासप्रभेण च । एवं प्रमुखैश्चान्यैर्देवपुत्रैः । चतुर्भिश्च महाराजैः सार्द्धं सपरिवारैः ॥ ब्रह्मणा च सहापतिना सार्द्धं द्वादशब्रह्मकायिकसहस्रेण शिखिना च ब्रह्मणा । ज्योतिःप्रभेण च ब्रह्मणा ॥ एवं प्रमुखैर्द्वादशभिश्च ब्रह्मकायिकदेवपुत्रसहस्रैः अष्टाभिश्च महानागराजैः सार्द्धं बहुनागकोटिशतसहस्रपरिवारैः ॥ चतुर्भिश्च किन्नरराजैः सार्द्धं बहुकिन्नरकोटिशतसहस्रपरिवारैः ॥ चतुर्भिश्च गन्धर्वकायिकैर्देवपुत्रैः सार्द्धं बहुगन्धर्वशतसहस्रपरिवारैः चतुर्भिश्चासुरेन्द्रैः सार्द्धम् बहुकोटिशतसहस्रपरिवारैः । चतुर्भिश्च गरुडेन्द्रैः सार्द्धं बहुगरुडकोटिनियुतशतसहस्रपरिवारैः ॥ राज्ञा चाजातशत्रुणा मागधेन वैदेहीपुत्रेण सार्द्धम् । बहुमनुष्यराजसामात्यपौरजानपदपरिवारैः ॥ तेन खलु पुनः समयेन भगवांश्चतसृभिः पर्षद्भिः परिवृतः पुरस्कृतः संस्कृतो गुरुकृतः पूजितो मानितोऽर्चितोऽपचायितः ॥ तदा बोधिसत्त्वविषयसन्दर्शनप्रणिधानव्यूहसमाधिविषयधारणीमुखव्यूहं समाधानमुखनिर्द्देशं सर्व्ववैशारद्यं नाम धर्म्मपर्य्यायसूत्रान्तं महावैपुल्यं बोधिसत्त्वानुगतं सर्वबुद्धपरिग्रहं भाषितुमारब्धवान् ॥ तदा नानावर्णरश्मयो निश्चचार ताः । यत्प्रभाभिरयं त्रिसाहस्रमहासाहस्रलोकधातुर्महतावभासेन स्फुटोऽभूत् ॥ तेन चावभासेन लोकान्तरिका अघा अघस्फुटा अन्धकारतमिस्राः । यत्रेमौ चन्द्रसूर्य्यौ एवं महर्द्धिकौ महानुभावौ महेशाख्यौ नाभितपतो न विरोचतस्तत्र ये सत्त्वा उपपन्नास्ते स्वकं स्वकमपि बाहुप्रसारितं न पश्यन्ति स्म । तत्रापि ते तेनावभासेन परिस्फुटाः समानाः अन्योन्यं पश्यन्ति स्म अन्योन्यं सञ्जानते स्म । सर्व्वाणि च बुद्धक्षेत्राणि च परिस्फुटानि संदृश्यन्ते स्म ॥ यावदवीचिर्महानिरयो यावद्ब्रह्मलोकं परिस्फुटं दृश्यते स्म । ये च तेषु सर्वेषु क्षेत्रेषु षट्सु

शब्देन । बुद्धबोधिसत्त्वशब्देनाविरहिता नित्यं ते बोधिसत्त्वा एवं रूपं शब्दं शृण्वन्ति स्म । पुनरपरं कुलपुत्र ये बोधिसत्त्वा महासत्त्वा पद्मायां लोकधातौ प्रत्याजाताः प्रत्याजनिष्यन्ति वा । सर्व्वे ते द्वात्रिंशद्भिर्महापुरुषलक्षणैः समन्वागतो योजनप्रभाव्यविनिपातधर्म्माणो यावद्बोधिपर्य्यन्तात् सर्व्वे ते बोधिसत्त्वा मैत्रचित्ता हितचित्ताः स्निग्धचित्ताः अकलुषचित्ता दान्तचित्ताः क्षमाचित्ताः समाहितचित्ताः प्रसन्नचित्ताः अप्रतिहतचित्ताः शुद्धचित्ताः कल्याणचित्ताः धर्म्मप्रीतिचित्ताः सर्व्वसत्त्वानां क्लेशप्रशमनचित्ताः पृथिवीसमचित्ताः लौकिकानां कथायामनभिरमचित्ताः लोकोत्तरायां कथायामनभिरतचित्ताः लोकोत्तरायां नाभिरतचित्ताः सर्व्वकुशलधर्म्मतृप्तिचित्ताः निरुपधौ महाप्रयुक्तचित्ता व्याधिजरामरणेभ्यः प्रशान्तचित्ताः सर्व्वक्लेशदहनचित्ताः सर्व्वसंयोजनप्रशमनचित्ताः सर्व्वधर्म्मामन्थेन चित्ताः । आशयबलिनः प्रयोगबलिनः प्रत्ययबलिनः प्रणिधानबलिनः मारभिन्नोद्घाटनबलिनो निष्पत्तिबलिनः कुशलमूलबलिनः समाधानबलिनः श्रुतबलिनः शीलबलिनः त्यागबलिनः क्षान्तिबलिनो वीर्य्यबलिनः ध्यानबलिनः प्रज्ञाबलिनः शमथबलिनः विपश्यनाबलिनः अभिज्ञाबलिनः स्मृतिबलिनः बोधिबलिनः सर्व्वमारविध्वंसनबलिनः । सर्व्वमारबलप्रमर्द्दनबलिनः सर्व्वपरप्रवादिनां सहधर्म्मेणानिग्रहबलिनः सर्व्वक्लेशविमर्द्दनबलिनः । ते च बोधिसत्त्वा ये पद्मायां लोकधातौ प्रत्याजाताः प्रत्याजायिष्यन्ति वा बहुबुद्धशतसहस्रकृताधिकारा हि अवरुप्तकुशलमूला ये च तत्र पद्मायां लोकधातौ बुद्धक्षेत्रे बोधिसत्त्वाः प्रत्याजाताः प्रत्याजायिष्यन्ति वा ध्यानाहारास्ते बोधिसत्त्वा धर्म्माहाराः गन्धाहारास्ते यथापि नाम देवा ब्रह्मकायिकाः; न च तत्र कवडिङ्काहाराः प्रज्ञायन्ते सर्व्वशश्च तत्राकुशलस्य नामापि नास्ति । सर्व्वशश्च तत्र मातृग्रामस्य नामापि नास्ति । प्रज्ञप्तिरपि नास्ति । सर्व्वशश्च तत्र दुःखशब्दो नास्ति ॥ सर्व्वशः प्रियाप्रियशब्दो नास्ति । पेयालं ॥ न क्लेशशब्दो न परिग्रहो न वाचान्धकारं न दुर्गन्धं न चित्तक्लेशता न कायक्लमता न नरकतिर्य्यग्योनियमलोकशब्दः । अपायप्रज्ञप्तिरपि नास्ति ॥ न कण्टकगहनपाषाणशर्करा न चाग्निर्न चन्द्रसूर्य्यौ न तारका रूपा न महासमुद्राः न सुमेरुचक्रवाडो न लोकान्तरिको न कालपर्व्वताः । न मौदपाषाणाः । न पांशुपर्व्वताः । न ते ये चात्र नाम पक्षिणो मनोज्ञाः स्निग्धाः स्वकस्वकेन स्वरेण इन्द्रियबलबोध्यङ्गानि प्रव्याहरन्ति स्म ।

अथ खलु रत्नवैरोचनो नाम बोधिसत्त्वो भगवन्तमेतदवोचत् ॥ कियन्महती सा भगवन् सा पद्मालोकधातुः । कियच्चिरमसौ पद्मोत्तरस्तथागतस्तिष्ठति ध्रियते यापयति । धर्म्मं च देशयति । ये चाद्यरात्रावनुत्तरा सम्यक्सम्बोधिरभिसम्बुद्धा । कियच्चिरं च परिनिर्वृतस्य सद्धर्म्मः स्थास्यति । कियत् चिरस्थायिनस्ते बोधिसत्त्वा ये पद्मायां लोकधातौ बुद्धक्षेत्रे प्रत्याजाताः प्रत्याजायिष्यन्ति वा किन्ते बोधिसत्त्वा विरहिता बुद्धदर्शनेन धर्म्मश्रवणेन संघोपस्थानेन । उताहो नेति । किं नामा आसीत् पूर्व्वं सा पद्मालोकधातुः कियच्चिरेण वा तत्र जिनसूर्य्यास्तं गतः ॥ यच्चानन्तरेण पद्मोत्तरेण तथागतेनानुत्तरा सम्यक्सम्बोधिरभिसम्बुद्धाः किं प्रत्ययमनेकवर्णबुद्धविकुर्व्वाणान् बुद्धप्रातिहार्य्यान् पश्यति । ये दशसु दिक्ष्वन्येषु बुद्धक्षेत्रेषु बुद्धा भगवन्तः प्रातिहार्य्याणि कुर्व्वन्ति । एकस्थान् पश्यन्ति । भग-

वानाह ॥ तद्यथापि नाम कुलपुत्र ! सुमेरुः पर्व्वतराजोऽष्टषष्टियोजनसहस्राण्युद्वेधेन । चतुरशीतियोजनसहस्राणि विस्तारेण । कश्चिदेव पुरुष आगच्छेत् ॥ वीर्य्यवान् बलवान् समाधिबलेन वा तं सुमेरुं पर्व्वतराजं सर्षपमात्रप्रमाणं भिन्द्यात् गणनातिक्रान्तास्ते सर्षपा भवन्ति । न शक्यं ते सर्षपाः केनचिद्गणयितुं स्थाप्य सर्व्वज्ञज्ञानेन । यावन्तस्ते सर्षपफला भवन्ति । तावन्तस्तातुर्द्द्वीपिका प्रमाणोपमा बुद्धक्षेत्रमेवाकीर्णं बोधिसत्त्वैः । तद्यथा सुखावतीलोकधातुर्बोधिसत्त्वैराकीर्णा । पद्मोत्तरस्य कुलपुत्र तथागतस्यार्हतः सम्यक्सम्बुद्धस्य त्रिंशदन्तरेऽल्पान्यायुष्प्रमाणं तिष्ठतो यापयतो धर्म्मं वै देशयतः । पद्मोत्तरस्य कुलपुत्र तथागतस्यार्हतः सम्यक्सम्बुद्धस्य परिनिर्वृतस्य दशान्तरे कल्पान् सद्धर्म्मः स्थास्यति । तेषां च बोधिसत्त्वानां महासत्त्वानां ये पद्मायां लोकधातौ प्रत्याजाताः प्रत्याजायिष्यन्ति वा तेषां चत्वारिंशदन्तरकल्पायुष्प्रमाणं पूर्व्वं च कुलपुत्र सा पद्मालोकधातुरन्दभानामसंभूवनत्वेवं परिशुद्धोऽभून्नैवमाकीर्णा शुद्धसत्त्वैर्यथैव तर्थैतर्हि पद्मालोकधातुः चन्दनायां कुलपुत्र लोकधातौ चन्द्रोत्तमो नामाऽभूत्तथागतोऽर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नो यावद्बुद्धो भगवान् स चापि विंशत्यन्तरे कल्पान् धर्म्मं देशितवान् । परिनिर्व्वाणकाले समये चाप्येकत्वात् बोधिसत्त्वाः प्रणिधानवैशितयाऽन्यबुद्धक्षेत्रं संक्रान्ताः ये चावशिष्टा बोधिसत्त्वास्तेषामेतदवोचत् ॥ अद्यरात्रौ मध्यमे यामे चन्द्रोत्तमस्तथागतोऽर्हन् सम्यक्सम्बुद्धः परिनिर्व्वास्यति परिनिर्वृतस्य भगवतो दशान्तरकल्पात् सद्धर्म्मः स्थास्यति । कः सद्धर्म्मान्तर्धानस्यानन्तरमनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते । तेन खलु पुनः समयेन गगनमुद्रो नाम बोधिसत्त्व स पूर्व्वप्रणिधानेन चन्द्रोत्तमेन तथागतेनार्हता सम्यक्सम्बुद्धेन व्याकृतः । भविष्यसि त्वं कुलपुत्र ! मम परिनिर्वृतस्य दशाभ्यन्तकल्पान् सद्धर्म्मः स्थास्यति रात्र्याः प्रथमे यामे मम सद्धर्म्मान्तरे स्थास्यति । तत्रैव रात्र्याः पश्चिमे त्वमनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे ॥ पद्मोत्तरो नाम भविष्यसि तथागतोऽर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नो यावद्भगवांस्तत्कालं बोधिसत्त्वो महासत्त्वो येन चन्द्रोत्तमस्तथागतोऽर्हन् सम्यक्सम्बुद्धो भगवांस्तेनोपजग्मुः॥ उपेत्य च चन्द्रोत्तमस्यार्हतः सम्यक्सम्बुद्धस्य सर्व्वे ते बोधिसत्त्वाः समाधानबलेन नानाप्रकारैर्बोधिसत्त्वविद्रूर्व्वैश्चन्द्रोत्तमस्य तथागतस्य पूजां कृत्वा त्रिष्कृत्वः प्रदक्षिणीकृत्वा भगवन्तमेतदवोचत् इच्छामो वयं भदन्त भगवन्निमे दशाभ्यन्तरकल्पानिरोधसमवहितेन चित्तेनातिनामयितुं । तत्र खलु कुलपुत्र चन्द्रोत्तमस्तथागतोऽर्हन् सम्यक्सम्बुद्धो गगनमुद्रं बोधिसत्त्वं महासत्त्वमामन्त्रयतऽवोचत् उद्गृह्ण त्वं कुलपुत्रेमं सर्व्वज्ञताकारधारणीमुखप्रवेशं सर्व्वातीतानागतैस्तथागतैरर्हद्भिः सम्यक्सम्बुद्धैर्योवराज्याभिषिक्तानां बोधिसत्त्वानां देशितं ये वै सर्हि दशसु दिक्षु सर्व्वलोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ते यापयन्ति तेऽपि बुद्धा भगवन्तो यौवराज्याभिषिक्तानां बोधिसत्त्वानां देशयन्ति येऽपि ते भविष्यन्त्यनागतेऽध्वनि बुद्धा भगवन्तस्तेऽपि यौवराज्याभिषिक्तानां बोधिसत्त्वानामिमां सर्व्वाकारधारणीमुखप्रवेशं देशयिष्यन्ति ॥ तद्यथा ज्वलिज्वलिनि महाज्वलिनि फटके वुटके संभदे महासंभदे । देया घटियघटिटये ठरठके समिसफसिदिलि खिसितिसिसकके महाकके । जये दुर्जये । अपमतिशान्ते शान्तनिर्घोषिणि । असुले जले । असुलपरिच्छिन्ने । भारभिन्यविशासने । मुक्ते

मुक्तपरिशुद्धे । अभोमपमोचने । दार-आष्टम्यशान्तिप्रज्ञाविद्याचरणे । नियहं परवादिनो
धर्म्मवादिनामनुग्रहं । आरक्षा धर्म्मवादिनां । चतूर्णां स्मृत्युपस्थानानां अधिमुक्तिपदप्रकाश-
नपदमिदं । शुद्धकाशये असमर्तनियम । अवेचित् अर्थः अर्थनिर्म्मोक्षणे । लोकाधिमुक्ते । सन्दध-
परिभावने । चतूर्णामार्य्यवंशानां । अधिमुक्तिपदप्रकाशपदा । मायीषे मायषे । धारे धार-
यति । शुभे शुभप्रभे । सतफले अग्रफले निष्फले । जिलेह अयुक्त अयुक्तनिर्मुक्ते । अत्र
चित्तविमुक्त वेति । विलफल । अयुक्तेऽयिति । विचिरति सुल । सुलमंजहिंषाम इति
सात्वा अत्वा नत्वा न सर्व्वलोके । अनर्कालविन्ध अमूसले । हतमन्ते । विशामवते ।
अफल । कफल । वयाशामारक्षितानां । अधिमुक्तिपदमिदं जगतः । अनिहारवततो
इदं फलं । नियोमफलं । समुद्रागयविभुष । यक्षेतमन्त्र । अनुमन्तो अक्रमन्तो । ईशावने ।
मन्त्रक्षा दशबलविग्रहस्था अमुस्थिता । सुनिघमा लोहतार्मसि । आलोके । असितृष्या ।
अशिमसि । प्रत्युत्पन्नबुद्धपूर्व्वसहारे । चतूर्णां सम्यक्प्रहाणानां । अधिमुक्तिपदप्रकाशपद-
मिदं । अन्धे मन्धे म । ममने । चिरे चिरते । शमे शमिता विशान्ते मुक्ते निरेतेमे समे
समसमे सवे अनपे । अश्रित शान्ते शमिष्टे । धारणी आलोकाभभासे । रतरते । रथ
वते । ध्यानवते । नेदपते । स्वप्ननिदर्शने । लोकप्रदीपनिदर्शने । चतूर्णां प्रतिसंविदामधि
मुक्तिपदप्रकाशपदमिदं । यत्र आहमि निदर्शने । ध्यानालोकनिदर्शनं च । प्रभाषने सर्व्व-
न्द्रियभूमातिक्रान्ते । सर्व्वभवत्रयमो । सर्व्वे पृथिवी सवङ्करे । गोकाङवदने । लोकानु-
दर्शनरिधू । चतूर्णां ऋद्धिपादानामधिमुक्तिपदप्रकाशपदमिदं । अयले बुद्धे दृधपवले ।
सर्व्वे महाक्षिद्धि । कंपति । निषिद्धया हि दूमरेक्सिरे । सोमे सपड़े दत्ते अवल अवल ।
अवरे विचिवरे नियरे मवचले मवरे । अनयन् मध्यासे । कंकमे प्रभाविनि । अमे निज
सामक्रमे नयते इन्द्रियाणां बलानामधिमुक्तिपदप्रकाशपदमिदं । पुष्पे सुपुष्पे । द्रुमपरि-
हारे । अभयकचिरे । वेकवंके । असमयन्तनिनिते ममले । यज्ञशिमिरे । लोकस्य विज्ञानं ।
नयसंगृहीते च युक्ते मुक्तान्तेन सत्वानां बोध्यङ्गानां अधिमुक्तिपदप्रकाशपदमिदं चक्रवक्ते ।
नेत्रसमायदे । कान्ते केते । कल्पवृक्षेरपि । प्रीतिरूपे सोमसंपन्ने । अरवो अरते । अरो-
त्तरे । अमूले मूले साधने । चतूर्णां वैशारद्यानामधिमुक्तिपदप्रकाशपदमिदं चक्रवक्रे ।
वर्त्तचक्रे चक्रधरे वरवज्रे वरे प्रवरे । हिले हिले धरे । आरपावते । ऊर्ज्जरे यथातिभंग-
निस्वरे ॥ यथापरं चरिनिशे यथाभपरिरिक्षिसत्वनिहारे । अरचशिखे । विर्यनिरहारे । बुद्धे
मार्गनिर्हारे समाधिनिर्हारे प्रज्ञानिर्हारे विमुक्तिनिर्हारे विमुक्तिज्ञानदर्शननिर्हारे नक्षत्र-
निर्हारे चन्द्रनिर्हारे सूर्य्यनिर्हारे । यदा चतुस्तरतथागतेन अद्भुतं निरद्भुतं संबुद्धं प्रबुद्ध-
बुद्धबुद्धं । तत्र बुद्धं निहंगमपरे । आले दलहपखड़े पखड़े । तथान्तलुमा गवरणि पूहनि
संप्रपूहनि । गतसंगमनुनिरुद्धानाशनिना सर्व्वधनिक्ष छित्ति छित्ति छिन्द्रुम । योव दिर्हिंग-
मावरे मरे । दनने । भरं भरे । भिड़े भिरे भिरे । रूपरे । भरवे । दरणे । धरणा हरे ।
रिद्रत्वभावर खुमा । अलवारिणा । इन्द्रशनि । धिधिरे । यति । महेश्वरललनि । समसुमे ।
अलमिनि सकालरस्थिति वरविः आभिचचडालसुरे । सर्व्वसुरा आवरसुरा । पुनरुनिता
मण्डितां आदिनकण्डिज्ञभामे । गन्धारे । अत्र हनिमकरे । मिरोहिणोसिद्धमत्ते । विलोक-

मते । बुद्धाधिष्ठिते । धारणीमुखे । खलु त्रिदशानां बलानामधिमुक्तिप्रकाशनपदमिदं । समनन्तरार्ध्वे खलु पुनर्भगवता अस्मिन् सर्व्वज्ञताकारधारणीमुखप्रवेशे ॥

अथ तावदियं त्रिसाहस्रमहासाहस्रीलोकधातुः षड्विकारं कम्पिताः प्रकम्पिता संप्रकम्पिता चलिता प्रचलिता संप्रचलिता चमिता प्रचमिता संप्रचमिता गर्ज्जिता प्रगर्ज्जिता उन्नमति प्रणमति संप्रणमति तथारूपश्चावभासः प्रादुर्भूतः । यद्दशसु दिक्षु गणना-समतिक्रान्तानां गङ्गानदीवालुकासमा लोकधातवः । समाः पाणितलजाता संदृश्यन्ते । येऽपि ते बोधिसत्त्वा महासत्त्वा दशसु दिक्षु गणनासमतिक्रान्तासु लोकधातुषु प्रतिवसन्ति । ये समाधिधारणीक्षान्तिप्रतिलब्धाः तेन तथागतबलेन स्वकस्वकेषु बुद्धक्षेत्रेष्वन्तर्हिता इमां महां लोकधातुमागत्वा गृध्रकूटे पर्व्वते भगवतः सकाशमुपसंक्रान्ता उपसंक्रम्य भगवतः पादौ शिरसा वन्दित्वा नानाप्रकारैर्विविधैर्बोधिसत्त्वविकुर्व्वितैर्भगवतः पूजां कृत्वा तत्रैव निषेदुः । सर्व्वज्ञताकारधारणीमुखप्रवेशश्रवणार्थं । गणनासमतिक्रान्ताश्च देवनागयक्षासुरकुम्भाण्डपिशाचा येन गृध्रकूटः पर्व्वतो येन च भगवांस्तेनोपजग्मुः उपेत्य भगवतः पादौ शिरोभिरभिवन्द्य एकान्ते निषेदुरिमं च सर्व्वज्ञताकारधारणीमुखप्रवेशं श्रवणार्थं । ये चात्र बोधिसत्त्वा महासत्त्वाः सन्निपतितास्ते सर्व्वे पद्मं बुद्धक्षेत्रं पश्यन्ति स्म । पद्मोत्तरं तथागतमर्हन्तं सम्यक्सम्बुद्धं महता बोधिसत्त्वगणेन परिवृतं समनन्तरोदाहृतस्य चास्य भगवता सर्व्वज्ञताकारधारणीमुखप्रवेशस्य द्वासप्ततिभिर्गङ्गानदीवालुकासमैर्बोधिसत्त्वैर्महासत्त्वैरियं धारणीप्रतिलब्धाश्च ते बोधिसत्त्वा दशसु दिक्षु गणनासमतिक्रान्ता लोकधातुस्थान् बुद्धान् भगवतः पश्यन्ति स्म । सर्व्वांश्च बुद्धक्षेत्रगुणव्यूहान् पश्यन्ति स्म । आश्चर्य्यप्राप्तास्ते समाधिबलेन बोधिसत्त्वविकुर्व्वितेन च बुद्धपूजां कृत्वा तस्थुः ॥ भगवांस्तानेवमाह । इमं कुलपुत्र सर्व्वज्ञताकारधारणीमुखप्रवेशं बोधिसत्त्वो महासत्त्वो भावयमानश्चतुरशीतिधारणीमुखशतसहस्राणि प्रतिलभते । द्वासप्ततिश्च धारणीमुखसहस्राणि प्रतिलभते षष्टिं च समाधिमुखसहस्राणि प्रतिलभते । इमां च धारणीं प्रतिलब्धो बोधिसत्त्वो महासत्त्वो महामैत्रीं प्रतिलभते । महाकरुणां प्रतिलभते । केवलमस्य समाधेः प्रतिलाभाय बोधिसत्त्वो महासत्त्वः सप्तत्रिंशद्बोधिपक्षान् धर्म्मानवबुध्यते सर्व्वज्ञज्ञानं च प्रतिलभते । इह च सकलबुद्धधर्म्माणां परिग्रहः । इमां च धारणीं स्वभावेन बुद्धा बुद्धा भगवन्तः सत्त्वानां धर्म्मं देशयन्ति । न चातित्तिमं परिनिर्व्वायन्ति । पश्यत कुलपुत्रा अस्याः सर्व्वज्ञताकारधारणीमुखप्रवेशायाः धारण्या अनुभावेनायं महतः पृथिवीपालस्य प्रादुर्भूतः । महांश्चावभासो येनावभासेनानन्ता पर्य्यन्ता बुद्धक्षेत्रा वज्ररेणावभासेन स्फुटा येनावभासेनानन्ता पर्य्यन्तेभ्यो बुद्धक्षेत्रेभ्यो इमेऽनन्ता पर्य्यन्ता बोधिसत्त्वा अभ्यागताः । इमं सर्व्वज्ञताकारधारणीमुखप्रवेशं श्रवणार्थं । ये चेह महायां लोकधातावनन्ता पर्य्यन्ता देवा कामावचरा रूपावचरा नागा यक्षासुरमनुष्या मनुष्या वा । इमं सर्व्वज्ञताकारधारणीमुखप्रवेशं श्रोष्यन्ति ते महश्रवणेन सर्व्वज्ञताकारधारणीमुखप्रवेशस्याविवर्त्तिनो भवन्त्यनुत्तरायां सम्यक्सम्बोधौ लिख्यमानश्चाविरहितो भवति बुद्धदर्शनेन धर्म्मश्रवणेन संघोपस्थानेन यावदनुत्तरेण परिनिर्व्वाणेन । स्वाध्यायमानश्च बोधिसत्त्व इमं सर्व्वज्ञताकारधारणीमुखप्रवेशं सर्व्वाणि शाटकर्म्माणि निरवशेषं क्षपयति । जन्मपरिवर्त्तेन

च प्रथमभूमिमाक्रामति। भावयमानश्च बोधिसत्त्वो महासत्त्व इमं सर्व्वज्ञताकारधारणीमुख-प्रवेशं येऽस्य बोधिसत्त्वस्य पञ्चानन्तर्याणि कृतानि उपचितानि तान्यस्य परिक्षयं गच्छन्ति। तेन जन्मपरिवर्त्तेन च प्रथमां भूमिमवक्रामति॥ यस्य चाप्यनन्तर्याणि तस्य तेन जन्मसर्व्वाख्यानानि कर्म्माणि निरवशेषं परिक्षयं गच्छन्ति जन्मपरिवर्त्तेन च प्रथमां भूमिमवक्रामति योऽपि न भावयति स्वाध्यायति। शृणुयाद्वा धर्म्मभाणकस्य ग्रन्थं बध्नाति तस्य गङ्गानदीवालिकासमा बुद्धा भगवन्तस्तिष्ठन्तो यापयन्तोऽन्यलोकधातुस्थाः साधुकारमनु-प्रदास्यन्ति। तेऽपि बुद्धा भगवन्तो व्याकरिष्यन्त्यनुत्तरायां सम्यक्सम्बोधौ न चिरेणासौ बोधिसत्त्वः पञ्चपरित्यागेन बोधिराज्येऽभिषिच्यते। एकजातिप्रतिबद्धश्च भवत्यनुत्तरायां सम्यक्सम्बोधौ। एवमेव यः कश्चिद्गन्धेन पूजां करोति। सोऽपि न चिरेणानुत्तरां सम्यक्सम्बोधिगन्धस्य लाभी भवति पुष्पैश्च पूजां कृत्वा धर्म्मभाणकस्यानुत्तराणि ध्यानपुष्पाणि प्रतिलभते। भक्तपानं दत्त्वा धर्म्मभाणकस्यानुत्तरस्य तथागताहारस्य लाभी भवति बोधिसत्त्वः। वस्त्रेणाच्छाद्य धर्म्मभाणकं अनुत्तरतथागतवर्णलाभी भवति। यस्य धर्म्मभाणकं रत्नैराच्छादयन्ति सोऽप्यचिरात् सप्तत्रिंशतां बोधिपाक्षिकधर्म्मरत्नानां लाभी भवति। तदेवं महर्द्धिकः कुलपुत्र बोधिसत्त्वानां महासत्त्वानां। अयं सर्व्वज्ञताकारधारणीमुखप्रवेशः। तत्कस्माद्धेतोर्य्यावद्दशमाकल्पेन बोधिसत्त्वपिटकमुपदिष्टं अनेन च सर्व्वज्ञताकारधारणी-मुखप्रवेशेन बोधिसत्त्वो महासत्त्वः।

अक्षयप्रतिभानतां प्रतिलभते। सनोऽयं धर्म्मचतुष्कञ्च प्रतिलभते एभिः कुलपुत्र सर्व्वज्ञताकारे धारणीमुखप्रवेशैश्चन्द्रोत्तमस्तथागतोऽर्हन् सम्यक्सम्बुद्धो यदा गगनमुद्रं बोधिसत्त्वं महासत्त्वमत्रादीदृश्यैव पृथिवीपालो भूतमेवतत्सावभासस्य लोके प्रादुर्भावो भूत-गणनातिक्रान्तानि वै दशसु दिक्षु बुद्धक्षेत्राण्युदारेणावभासेन स्फुटान्यभूवन्। एवमेव समानि पाणितलोपमानि विषमाणि पृथिवीप्रदेशानि दृश्यन्ते। ये च तत्र बोधिसत्त्वाः सन्निपतितास्ते दशसु दिक्षु गणनासमतिक्रान्तेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः पश्यन्ति। एवमेव दशभ्यो दिग्भ्यो गणनासमतिक्रान्तैर्बुद्धक्षेत्रैर्गणनासमतिक्रान्ता बोधिसत्त्वाश्चन्दनां लोकधातुमुपसंक्रान्ताश्चन्द्रोत्तमस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य वन्दनाय पर्य्युपासनाय। इदमेव सर्व्वज्ञताकारधारणीमुखप्रवेशं श्रोतुम्। तत्र कुलपुत्र चन्द्रोत्तमस्तथागतोऽर्हन् सम्यक्-सम्बुद्धो बोधिसत्त्वान् महासत्त्वानामन्त्रयते। अभिजानाम्यहं कुलपुत्र ये बोधिसत्त्वा एक-जातिप्रतिबद्धास्त इमां दशान्तरकल्पां निरोहमवहितेन चेतसा विहरित्वा वसित्वा बोधि-सत्त्वा अस्य गगनमुद्रस्य बोधिसत्त्वस्य महासत्त्वस्य सकाशादिमो दशान्तरकल्पान् इममेव सर्व्वज्ञताकारधारणीमुखप्रवेशं बोधिसत्त्वपिटकं श्रुतवन्तोऽभूवन् इमां दशान्तरकल्पान् धर्म्मं श्रुत्वा दशसु दिक्षु तेषु गणनासमतिक्रान्तेषु बुद्धक्षेत्रेषु तेषां गणनातिक्रान्तानां तिष्ठतां यापयतां भगवतामन्तिके चित्तसमाधिप्रसादाद्यो न चित्तप्रसादहेतूनामवरसकुशलमूला भूत्वा नानाविधैर्बोधिसत्त्वविकुर्व्वितैः चन्द्रोत्तमस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य पूजां कृत्वा भगवन्तमेतदवोचत्। एषां भदन्त दशानामन्तरकल्पानामत्ययेन गगनमुद्रो बोधिसत्त्वो महा-सत्त्वोऽनुत्तरं धार्म्मिकं धर्म्मचक्रं प्रवर्त्तयिष्यन्ति॥

चन्द्रोत्तम आह। एवमेव कुलपुत्रेममेषां दशानामन्तरकल्पानामत्ययेन गगनमुद्रो बोधिसत्त्वो महासत्त्वोऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते। तस्यामेव रात्र्यामत्ययेन धार्म्मिकं धर्म्मचक्रं प्रवर्त्तयिष्यति॥ बोधिसत्त्वानामिह दशान्तरकल्पानिदमेव सर्व्वज्ञताकारधारणीमुखप्रवेशं देशयिष्यति। तत्र ये बोधिसत्त्वा महासत्त्वास्ताच्छान्तिकादिमं श्रोष्यन्ति तं धर्म्मं श्रुत्वा कुशलमूलान्येव रोपयित्वा यस्मिन् समये गगनमुद्रो बोधिसत्त्वोऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते। सोऽभिसम्बुद्धबोधिं धार्म्मिकं धर्म्मचक्रं प्रवरचक्रं अवैवर्त्तिकचक्रं प्रवर्त्तयित्वा बहुबुद्धकोटिनियुतशतसहस्रावैवर्त्तिकां स्थापयित्वा ये बोधिसत्त्वा इह दशान्तरकल्पात् तस्य सकाशादिमं सर्व्वज्ञताकारधारणीमुखप्रवेशं धर्म्मं देशयमानं श्रोष्यन्ति। ते तस्मिन् समये धर्म्मं श्रुत्वा एकजातिप्रतिबद्धा भविष्यन्ति। ये तु कल्पं श्रोष्यन्ति। ते बोधिसत्त्वास्तस्मिन् समये भूमिमवक्रमिष्यन्ति॥ अवैवर्त्तिकाश्च भविष्यन्ति। अनुत्तरायां सम्यक्सम्बोधौ तस्मिन्नेव समये इमां धारणीं पर्य्यन्ततो लप्स्यते इत्युक्त्वा चन्द्रोत्तमस्तथागतोऽर्हन् सम्यक्सम्बुद्धो बोधिसत्त्वानां महासत्त्वानां विविधानि बुद्धविषयप्रातिहार्य्याणि सन्दर्शयित्वा गगनमुद्रस्य बोधिसत्त्वस्य महासत्त्वस्य नारायणं समाधिं निदर्शयित्वा वज्रमयमात्मभावमधितिष्ठति प्रभोव्यूहं समाधिं निदर्शयति स्म। येन प्रवर्त्तितं धर्म्मचक्रं इह दशान्तरकल्पानां बोधिसत्त्वानामिदं सर्व्वज्ञताकारधारणीमुखप्रवेशं धर्म्मं देशयति। सर्व्वबुद्धक्षेत्रेषु बुद्धानुभावेन। लक्षणानुव्यञ्जनैरवभासितः संदृश्यते। वज्रमण्डलसमाधिं दर्शयति येन बोध्यासनमुपवर्त्तितधर्म्मचक्रो बोधिसत्त्वानां धर्म्मं देशयति। चक्रमालं समाधिं निदर्शयति। येन धर्म्मचक्रं प्रवर्त्तयमानो बहुप्राणिकोटीनियुतशतसहस्राणि अवैवर्त्तिकां स्थापयति धर्म्मचक्रप्रवर्त्तनायेति विदित्वा गगनमुद्रो बोधिसत्त्वो महासत्त्वोऽपरिमितेन बोधिसत्त्वसंघेन भगवतः पूजां कृत्वा स्वकस्वकेषु कूटागारेषु प्रविष्टः स्थितः। चन्द्रोत्तमोऽपि तथागतोऽर्हन् सम्यक्सम्बुद्धस्तामेव रात्रिमनुपधिशेषे निर्व्वाणधातौ परिनिर्वृतस्ते च बोधिसत्त्वा तस्यामेव रात्र्यामत्यये तस्य भगवतः शरीरे पूजां कृत्वा स्वकस्वकेषु कूटागारेषु प्रविशन्ति स्म। अयमेव पुनर्बोधिसत्त्वाः स्वकस्वकं बुद्धक्षेत्रं गताः। ये च तत्र बोधिसत्त्वा एकजातिप्रतिबद्धास्ते निरोधसमाधानेनैतान् दशान्तरकल्पानतिनामयन्ति। गगनमुद्रो बोधिसत्त्वो महासत्त्वो बोधिसत्त्वान् महासत्त्वानारभ्य धर्म्मं देशयति। तेषां च बोधिसत्त्वानां महासत्त्वानां दशान्तरकल्पान् कुशलमूलान्यवरोपितवान्। सोऽन्तरायानुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः तेन चायं धर्म्मचक्रं प्रवर्त्तितं। महाप्रातिहार्य्यं कृतं अनेकानि प्राणिकोटीनियुतशतसहस्राणि अवैवर्त्तिकान्यनुत्तरायां सम्यक्सम्बोधौ प्रतिष्ठापितानि। अस्मिन् खलु पुनः सर्व्वज्ञताकारधारणीमुखप्रवेशे भाष्यमाणे अशीतीनां बोधिसत्त्वनियुतशतसहस्राणामनुत्पत्तिकेषु धर्म्मेषु क्षान्तिः प्रतिलब्धा चानवतिश्च प्राणिकोट्योऽवैवर्त्तिकाः स्थापिता अनुत्तरायां सम्यक्सम्बोधौ द्वासप्ततिभिश्च बोधिसत्त्वनियुतैरियं सर्व्वज्ञताकारधारणीमुखप्रवेशा धारणी प्रतिलब्धा। गणनातिक्रान्तानां देवमनुष्याणामनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादितानि।

अथ खलु रत्नगर्भराधनो बोधिसत्त्वो महासत्त्वो भगवन्तमेतदवोचत्। कतमे-

भदन्त भगवन् धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्व इमां धारणीं प्रतिलभते । भगवानाह । चतुर्भिः कुलपुत्र धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्व इमां धारणीं प्रतिलभते । कतमैश्चतुर्भिरिह बोधिसत्त्वो महासत्त्वश्चतुर्ष्वार्यवंशेषु व्यवस्थितो भवति । कतमेषु चतुर्षु इह बोधिसत्त्वो महासत्त्व इतरेतरेण सन्तुष्टो भवति । इतरेतरचीवरसन्तुष्टश्च वर्णवादी भवति । स न चीवरहेतोरप्रतिरूपामेषणां समापद्यते । अथ लब्धचीवरो न परितप्यते । लब्धावचीवरो मे रक्तः परिभुङ्क्ते । अरक्तोऽग्रथितोऽमूर्च्छितोऽनध्यवसितोऽनध्यवसानमापन्नः आदीनवदर्शी निःसरणं प्रजानन् परिभुङ्क्ते । अस्मिन् प्रथमे आर्यवंशे व्यवस्थितो भवति बोधिसत्त्वो महासत्त्वः । यथा चीवरमेव पिण्डपातं शय्यासनं ॥

पुनरपरं बोधिसत्त्वो महासत्त्व इतरेतरेण ग्लानप्रत्ययभैषज्यपरिष्कारेण सन्तुष्टो भवति । इतरेतरग्लानप्रत्ययभैषज्यपरिष्कारसन्तुष्टश्च वर्णवादी भवति । स ग्लानप्रत्ययभैषज्यपरिष्कारहेतोरप्रतिरूपामेषणां न समापद्यते । सोऽलब्ध्वा ग्लानप्रत्ययभैषज्यं न परितप्यते । प्रतिलब्धो रक्तः परिभुङ्क्तेऽरक्तोऽग्रथितोऽमूर्च्छितोऽनध्यवसितोऽनध्यवसानमापन्न आदीनवदर्शी निःसरणं प्रजानन् परिभुङ्क्ते । एषु चतुर्ष्वार्यवंशेषु व्यवस्थितो भवति । एभिश्चतुर्भिर्धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्व इमां धारणीं प्रतिलभते भावयति च । अपरैः पञ्चभिर्धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्व इमां सर्वाक्षराकारधारणीमुखप्रवेशधारणीं प्रतिलभते । कतमैः पञ्चभिरिह बोधिसत्त्वो महासत्त्वः । आत्मना शीलवान् विहरति प्रातिमोक्षसंवरसंवृतः । आचारगोचरसंपन्नोऽणुमात्रेष्ववद्येषु भयदर्शी समादाय शिक्षते शिक्षापदेषु परानपि शीलविरहितां दृष्ट्वा शीलसंपदि समादापयति विनयति निवेशयति प्रतिष्ठापयति । अनेन प्रथमेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वः । पुनरपरं बोधिसत्त्वो महासत्त्वः । दृष्टिव्यसनगतां सत्त्वानां मिथ्यादृष्टिमुत्थाप्य सम्यग्दृष्टौ समादापयति विनयति निवेशयति प्रतिष्ठापयति । अनेन द्वितीयेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वः ।

पुनरपरं बोधिसत्त्वो महासत्त्वोऽनाचारव्यसनगतानां सत्त्वानां सम्यगाचारे समादापयति विनयति निवेशयति प्रतिष्ठापयति । अनेन तृतीयेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वः । पुनरपरमाशयविपन्नान् सत्त्वानाशयसंपन्नान् समादापयति विनयति निवेशयति प्रतिष्ठापयति । अनेन चतुर्थेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वः । पुनरपरं बोधिसत्त्वो महासत्त्वः श्रावकप्रत्येकबुद्धयानसंप्रस्थितान् सत्त्वाननुत्तरायां सम्यक्सम्बोधौ । समादापयति विनयति निवेशयति प्रतिष्ठापयति । अनेन पञ्चमेन धर्मेण समन्वागतो बोधिसत्त्वो महासत्त्वः । एभिः पञ्चभिः धर्मैः समन्वागतो बोधिसत्त्वो महासत्त्व इमां धारणीं प्रतिलभते । अपरैः षड्भिर्धर्मैं धर्मैःसमन्वागतो बोधिसत्त्वो महासत्त्व इमां धारणीं प्रतिलभते । कतमैः षड्भिरिह बोधिसत्त्वो महासत्त्वः स्वयमेव बहुश्रुतो भवति श्रुताधारः श्रुतसन्निचयः । तस्य ये ते धर्मा आदौ कल्याणं मध्ये कल्याणं पर्यवसाने कल्याणाः स्वर्थाः सुव्यञ्जनाः केवलं परिपूर्णं परिशुद्धं पर्यवदातं ब्रह्मचर्यमभिवदमाना अभिवदन्ति तद्रूपा अनेन धर्मा बहवः श्रुता भवन्ति धृता वचसा परिचिता मनसा अ(न्वी)क्षिता दृष्ट्या सुप्रतिविद्धाः । स एवं बहुश्रुतः समानः परानश्रुतान् सत्त्वान् बहुश्रुते

समादापयति विनयति निवेशयति प्रतिष्ठापयति । अनेन प्रथमेन धर्म्मेण समन्वागतो भवति । पुनरपरं बोधिसत्त्वो महासत्त्वोऽनीर्ष्यको भवति अमत्सरी । स परानीर्ष्यामात्सर्य्याभिभूताननीर्ष्यायां त्यागसम्पदि समादापयति यावत् प्रतिष्ठापयति । अनेन द्वितीयेन धर्म्मेण समन्वागतो बोधिसत्त्वो महासत्त्वो भवति । पुनरपरं बोधिसत्त्वः सत्त्वानामविहेठनजातीयो भविता । अभयप्रदाता नानोपद्रवैरुपद्रुतान् सत्त्वानुपद्रवेभ्यः परिमोचयिता । अकुहकश्च भवत्यलपकोऽशठश्च भवत्यमायावी शून्यतया च बहुलो विहरति । एभिः षड्भिर्धर्म्मैः समन्वागतो बोधिसत्त्वो बोधिसत्त्वो महासत्त्व इमां सर्व्वाक्षताकारधारणीमुखप्रवेशधारणीं प्रतिलभते । एवंरूपैर्धर्म्मैः समन्वागतो बोधिसत्त्वो महासत्त्वः सत्त्वान् समासविस्तरेण सप्तवर्षाणि मानद्रामितमन्त्रपदं त्रिः कृत्वा दिवा पञ्च मण्डलेन निषद्याकायगतां स्मृतिमुपस्थाप्य शून्यताविहारेण इमान्येवं द्रामिद्रामन्त्रपदा उच्चारयितव्याः । उत्तिष्ठता समन्ततो दशसु दिक्षु तिष्ठतो यापयतो बुद्धान् भगवतः स्मरता सततं बुद्धानुस्मृतिं भावयता सप्तानां वर्षाणामत्ययेन । इमां सर्व्वाक्षताकारधारणीमुखप्रवेशधारणीं प्रतिलभते बोधिसत्त्वो महासत्त्वः । अस्या धारण्याः प्रतिलम्भात् बोधिसत्त्वो महासत्त्वस्तदुपमायां महाचक्षुः प्रतिलभते येन महाचक्षुषा दशसु दिक्षु गङ्गावालिकासमेषु बुद्धक्षेत्रेषु तिष्ठतो ध्रियतो महाप्रातिहार्य्यविदर्शयतः सर्व्वं पश्यति तेषां बुद्धानां भगवतां सितविदर्शनं दृष्ट्वा चतुरशीतिधारणीमुखसहस्राणि प्रतिलभते । द्वासप्ततिश्च समाधिमुखसहस्राणि प्रतिलभते । षट्त्रिंश धर्म्ममुखसहस्राणि प्रतिलभते । अस्यां च सर्व्वाक्षताकारधारण्यां प्रतिष्ठितो बोधिसत्त्वो महासत्त्वो महामैत्रीं प्रतिलभते महाकरुणां प्रतिलभते येन बोधिसत्त्वेन महासत्त्वेनेयं धारणी प्रतिलब्धा भवति । तेन यदि पञ्चानन्तर्य्याणि कर्म्माण्यावारणीयाणि भवन्ति । सप्त जन्मान्तरेण परिक्षयं गच्छन्ति । तृतीये जन्मनि निरवशेषं तानि कर्म्माणि नष्टानि भवन्ति दशमीं भूमिमेव क्रामति । यस्य तु बोधिसत्त्वस्य नानन्तर्य्याणि कर्म्माणि कृतानि भवन्ति । तस्यान्यानि सर्व्वकर्म्मावरणानि परिक्षयं गच्छन्ति । जन्मपरिवर्त्तेन दशभूमीः समतिक्रामति न चिरस्येदानीं सप्तत्रिंशद्बोधिपक्षान् धर्म्मान् प्रतिलभते । सर्व्वध्यानञ्च प्रतिलभते । एवं बहुकरः कुलपुत्र बोधिसत्त्वानां अयं सर्व्वाक्षताकारधारणीमुखप्रवेशः यत्तत्समितं बोधिसत्त्वो महासत्त्वो बुद्धानां भगवतां स्मितविदर्शनाम् प्रातिहार्य्यं दृष्ट्वा एवंरूपेण ऋद्धिविषयेन समन्वागतो भवति । यद्गङ्गानदीवालिकासमेषु लोकधातुषु गङ्गानदीवालिकासमानां बुद्धानां भगवतां पूजां कृत्वा तेषां बुद्धानां भगवतां धर्म्मं श्रुत्वा नानाविधसमाधिक्षान्तिधारणीं प्रतिलब्धाः । इममेव बुद्धक्षेत्रमागच्छन्ति । एवं कुलपुत्र बोधिसत्त्वानां महासत्त्वानां सर्व्वाक्षताकारधारणीमुखप्रवेशः कर्म्मपरिक्षयाय संवर्त्तते कुशलाभिवृद्धये च कुलपुत्र मत्त्वा अस्याः सर्व्वाक्षताकारमुखप्रवेशधारण्या नाम श्रोष्यन्ति तस्य च भगवतस्तथागतस्य तेषां सर्व्वकर्म्मावरणानि क्षयं गमिष्यन्ति । नियताश्च भविष्यन्त्यनुत्तरायाः सम्यक्सम्बोधेः ।

अथ ते बोधिसत्त्वा एवमाहुः । अस्माभिर्भगवान् गङ्गानदीवालिकासमेषु अतीतेषु भगवत्सु ध्रियत्सु यापयत्सु । इयं धारणी श्रुता च प्रतिलब्धा च । अपर एवमाहुः । अस्माभिरिदं गङ्गानदीवालिकासमानां । अपरे त्रिभिः । अपरे चतुर्भिः । अपरं

पञ्चभिः । अपरे षड्भिः । अपरे सप्तभिरपरेऽष्टभिः । अपरे एवमाहुः । अस्माभिर्नवसु
गङ्गानदीवालिकासमेषु सम्यक्सम्बुद्धेष्वतीतेषु तिष्ठत्सु ध्रियमाणेषु यापयत्सु । इयं
सर्व्वश्रुताकारधारणीमुखप्रवेशधारणी श्रुत्वा सर्व्वाकारेण प्रतिलब्धा । मैत्रेयस्तु बोधिसत्त्वो
महासत्त्व एवमाह । यथा दशगङ्गानदीवालिकासमान् कल्पानतिक्रम्य संतारणो नाम महा-
कल्पोऽभूत् तस्मिन्निदं बुद्धक्षेत्रं सर्व्वालङ्कारविभूषितं नामाभूत् शालेन्द्रराजो नाम बुद्धोऽभूद्विद्या-
चरणसम्पन्नः । सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो
भगवाननन्तकोटिनियुतशतसहस्रेण भिक्षुसंघेन परिवृतः । तथा गणनातिक्रान्तैर्बोधिसत्त्वैः
परिवृत इममेव सर्व्वश्रुताकारधारणीमुखप्रवेशं धारणीं भाषितवान् तस्यान्तिके मयेयं
धारणी श्रुता भावना परिपूर्य्याधिगता । एवमप्रमेयेषु कल्पेषु अप्रमेयतरेषु असंख्येयतरेषु
अतीतानां सम्यक्सम्बुद्धानां तिष्ठतां ध्रियतां यापयतां असंख्येयैर्बोधिविकुर्व्वितैस्तेषां
बुद्धानां भगवतां पूजां कृत्वा एकैकस्य बुद्धस्य सकाशे अप्रमेयाण्यसंख्येयान्यतुल्यानि अप्र
मेयाणि कुशलमूलान्यवरोप्य पुण्यस्कन्धः परिगृहीतस्तेनाहं कुशलमूलैर्बहुभिर्बुद्धसहस्रैर्व्याकृतः
कालमेव वल्व्योऽहं प्रणिधानविषयेनैव चिरं संसारे संसृतो येन मे पूर्व्वं संसारे संसरता
अनुत्तरा सम्यक्सम्बोधिर्नाभिसम्बुद्धा सोऽहमिदानीं भगवता यौवराज्येनाभिषिक्तो विमुक्ति-
पट्टश्च मे प्रज्ञाशिरसि बद्धोऽनुत्तरायां सम्यक्सम्बोधौ ।

अथ खलु भगवान् मैत्रेयं बोधिसत्त्वमेतदवोचत् । एवमेतन्मैत्रेय यत्त्वं शालेन्द्रराजस्य
तथागतस्यार्हतः सम्यक्सम्बुद्धस्यान्तिकादिमां सर्व्वश्रुताकारधारणीमुखप्रवेशधारणीं प्रति-
लब्धवान् आकाङ्क्षमाणस्त्वं मैत्रेय दशानां कल्पानामत्ययेनानुत्तरायां सम्यक्सम्बोधिमभिसम्भो-
त्स्यसे । यथैव ते मैत्रेय दशापरिपूर्णाधिकस्त्वं मैत्रेय औघमेघानुत्तरेण ज्ञानेनानुपधिशेषे
निर्व्वाणधातौ प्रवेष्टुम् । यच्च त्वं मैत्रेय इयच्चिरं संसारेऽभिरतस्तत्सर्व्वं प्रणिधानवशेन
कालमेघिना अनेन ते मैत्रेय एतर्हि ममान्तिकाद् यौवराज्यं परिगृहीतं । अतीतानामपि ते
तथागतानामन्तिके यौवराज्यं परिगृहीतं । तत्र भगवान् सर्व्वावतीं पर्षदमवलोकयतो बोधि-
सत्त्वपर्षदं भिक्षुपर्षदं भिक्षुभिक्षुण्युपासकोपासिकापर्षदं देवनागयक्षराक्षसगन्धर्व्वमनुष्यामनुष्यं
व्यवलोक्य तस्यां वेलायामिमानि मन्त्रपदान्यभाषत । दान्तभूमिः । दमथभूमिः स्मृति-
भूमिः प्रज्ञाभूमिर्वैशारद्यभूमिः प्रतिसंविद्भूमिरनुत्तलेपभूमिः समतापरित्तयोपेक्षभूमिर्ज्ञाति-
त्तयभूमिर्मनुजविन्मुञ्जः । मलतप्रतः विषाग्रः । दशावतेवशतः तेरण । वेशलग्र । अप्रमुखतः
विमतिविमतिथापधिररे गमतत्रक्षिसक्तमर्हति चौरधतो मेखे सुद्रदहरवसे प्रज्ञा ता बुबुद-
हस्तमित । सन्तोषवन्तः हलपति लय अरहुटा अमुन्धमं अर्थवति । सुमवति । ते हीन ह्वि
च । अकेनेति च केने ते समके विषाभटे । दूके हूदवल अत्र तत्र कुदपं लरुपं । ले तप कय
संवर्त्तः । सर्व्वतर्व्वः अनिरुद्धः दिह खलम्बि । फलबहुफल । शतफलप्रिष्टवत्ते । अपि देवानां ।
भगवान् प्रतीत्यसमुत्पादप्रतिसंयुक्तान्यधिमुक्तिपदानि प्रकाशयति । एषु प्रकाश्यमानेषु
षष्टिभिर्देवनियुतैः सत्यदर्शनं कृतमभूत् तत्फलमग्रफलं । सेलह । अलह । निलं हरे ।
वैचसख्या इदं फलं । नियामफलं । नमुदय निधूख । प्रज्ञाचक्र । सुनिर्हृतिचक्र । ज्ञानो-
चक्र । एभिरधिमुक्तिपदैर्देशानां देवकोटीनामनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पा-

दितानि । तत्रैवावर्त्तिका स्थिताः पश्य मोमते । अनुमतो । अकुमतो अकुमति च्छीट
चके । मन्त्रस्था देशबलविप्रवस्था । हुहास्थिते । अतिमति तीक्ष्णमति । आलोकस्ते-
रिमुक्ते । षभिरधिमुक्तिपदैश्चतुःषष्टीनां नागसहस्राणां अनुत्तरायां सम्यक्सम्बोधौ
चित्तान्युत्पादितानि । तत्रैव च अवैवर्त्तिकाः संवृत्ताः । अप्रभासमदना । अहद्यो । भग-
वद्यो । कारणास । पिद्धमति । समं ततो । अले वले पिटकरो । महावले । आजदरे ।
धेरणामि गलेश । उदास । कुकाश विरोयो विरूपमुख । अविहस्त सक्तिवल । असुरो
विन । असुरो प्रमर्द्दने । षभिरधिमुक्तिपदैर्द्वादशानां यक्षकोटीनां अनुत्तरायां सम्यक्-
सम्बोधौ चित्तान्युत्पन्नानि तत्रैवावैवर्त्तिकाः संवृत्ताः । अर्थे पिलिले तिनिपे । संतीर्थे ।
कतिने मेन धोमे । ननमक्ते । उपेरमे । सुदमे । सतिमे । सनिरुसूरे । सनिरुसूरे ।
धारणीयदेवद्रवदेव । सनाग । सयक्षासुरदेवा नागा निवक्तिपरिवारा निरुक्तलोनि स्मृति
प्रज्ञा परिवारमभिप्रतिलाभी । गतिष्टतिपरिवारगतिष्टतिलाभी पूर्व्वकेषु हितेषु चरित-
वन्तः । शीतवन्तः । सितभागे । मार्गसुद्रविशापकर्षविचयरद्धु । श्रोदारपदेश्वरचतुसुरमुद्र ।
यक्षमुद्र । राक्षसमुद्र विदिवे दिमे । तये । ततये वधानमे । प्रणाश्रे । नेयवं धरणीये ।
आविश्वदिशाशोधने वाक्यशुद्धे जिह्वाशुद्धे । वाधि परिकर्म्म प्रज्ञाशुद्धिस्मृतिमतिगतिधृति-
शयानप्रतिशरणमुद्धिः । जयचक्रे शून्यचक्रे स्वयः । षभिरधिमुक्तिपदैः संघवैशारद्यानामसुर-
सहस्राणामनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादितानि । अवैवर्त्तिकाश्च समवस्थिताः । तत्र
भगवान् वैशारद्यसमवसरणं नाम बोधिसत्त्वसमापन्नस्पते स्म । दुर्लभं कुलपुत्र तथागता-
नामर्हतां सम्यक्सम्बुद्धानां लोके प्रादुर्भावो दुर्लभा इमे शीलसमा धीमप्रज्ञाधिमुक्ति
विमुक्तिज्ञानदर्शनपरिभाविता अमी मन्त्रपदाः सत्त्वानां हिताय बोधिसत्त्वगुणविष्पादनार्थं
कुलपुत्र तथागतेन पूर्व्वं बोधिसत्त्वचर्यं विचारतनदसमयममसान्तिवीर्य्यसमाधिप्रज्ञा परिगृहीता
बहवो बुद्धकोटिनियुतशतसहस्राः पर्युपासिताः क्वचिद्दानन्द त्वं क्वचिच्छीलं रक्षितं क्वचिद्ब्र-
ह्मचर्य्यं चीर्णं क्वचिद् भावना निषेविता क्वचित् क्षान्तिर्भाविता क्वचिद्वीर्य्यमारब्धं ।
क्वचित् समाधिर्निष्पादितः क्वचित् प्रज्ञा सेविता । बहुप्रमेयं विविधं नानाप्रकारं शुभं
कर्म्म कृतं येनेतर्हि ममानुत्तरं ज्ञानं प्रतिलब्धं अनेकं कल्पकोटिनियुतशतसहस्रं कुलपुत्र
तथागतेन पूर्व्वं बोधिसत्त्वचर्यं चिरता मया ये शून्यमुक्तसंभिन्नप्रलापवर्ज्जिताः । अनेकविधं
कुशलं धाकर्म्माभिचित्तं बहुलीकृतं । येनेतर्हि प्रभूतविवृत्ता प्रतिलब्धा न हि कुलपुत्र
तथागता अर्हन्तः सम्यक्संबुद्धा अनाथा कथयति ।

अथ भगवांस्ततः पर्यङ्क अध्यभिसंस्कारमभिसंस्कार्षीत् यथाभिसंस्कृतेनाध्यभिसंस्कारेण
सर्व्वपुण्यसमवसरणं नाम समाधिं समापन्नः । सुखाच्च त्रिचेन्द्रियं निर्यामयित्वा स्वं पुत्र-
मण्डलं प्रच्छादयते स्म । जिह्वेन्द्रियात् षष्टिरश्मिकोट्यः प्रमुक्तास्तेश्च रश्मिभिः । अयं त्रि-
साहस्रमहासाहस्रो लोकधातुरुदारेणावभासेन स्फुटोऽभूत् तैश्च रश्मिभिर्निरयतिर्य्यग्योनि-
यमलोकदेवमनुष्याः स्फुटा बभूवुः । ते च रश्मयो ये नैरयिकाः सत्त्वा अग्निना प्रज्वलितगात्रा
दह्यन्ते । तेषां शीतला वायवो वान्ति । येषां सत्त्वानां तन्मुहूर्त्तं सुखवेदना प्रादुर्बभूव ।
एकैकस्य च नैरयिकस्य नैरयिकस्य सत्त्वस्य पुरतः बुद्धनिर्म्मितं तिष्ठति । द्वात्रिंशद्भि-

र्मैद्यापुरुषलक्षणैः समलङ्कृतगात्रः । अशीतिभिरनुव्यञ्जनैर्विराजिततनुं दृष्ट्वा ते नैरयिकाः सुखसमर्पिता बुद्धदर्शनाप्यायितशरीरा बुद्धं दृष्ट्वैवं चिन्तयन्तोऽस्य सत्त्वस्यानुभावेनास्माभिः सुखवेदना प्रतिलब्धा ते भगवतः सकाशे प्रेमप्रसादं गौरवं च संजनयन्ति । भगवांस्तेषां कथयति । भोः सत्त्वा एवं वाचं भाषध्वं । नमो बुद्धाय नमो धर्माय नमः संघाय नित्यमेवं सुखसमर्पिता भविष्यथ । ततस्ते नैरयिकात् सुखात् अञ्जलिं प्रगृह्य वाचमुदीरयन्ति । नमो बुद्धाय धर्माय नमः संघाय ।

अथ ते नैरयिकाः सत्त्वास्तेन कुशलमूलेन तेन च चित्तप्रसादेनाततः च्यवित्वा एकेभ्यो देवेष्वभ्युपपन्ना एकेभ्यो मनुष्येषु येऽपि शीतनरकेषूपपन्नाः सत्त्वास्तेषामुष्णा वायवः प्रवायन्ति । पूर्ववद् यावन्मनुष्येषूपपद्यन्ते एवं प्रेतानां विषयाणां क्षुत्तृष्णापरिज्वलितगात्राणां तेषां ते रश्मयो बुद्धाधिष्ठानेन निर्वाणं कुर्वन्ति । सुखावेदनां संजनयन्ति । एकैकस्य प्रेतस्य निर्मितं बुद्धरूपमग्रतः स्थितं भवति द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतं अशीत्या चानुव्यञ्जनैर्विराजितगात्रं तं दृष्ट्वा ते प्रेता बुद्धदर्शनात् सुखप्रीणितगात्रा एवं चिन्तयन्तः । अस्य सत्त्वस्यानुभावेनास्माकं सुखावेदना प्रतिलब्धा । ते भगवतः सकाशे प्रसादं प्रेमगौरवं चोत्पादयन्ति । भगवांस्तेषां कथयति । यूयं सत्त्वा एवं वाचमुदीरयत । नमो बुद्धाय नमो धर्माय नमः संघाय नित्यमेवं सुखसमर्पिता भविष्यथ । ततस्ते प्रेता अञ्जलिं प्रगृह्यैवं वाचमुदीरयन्ति । नमो बुद्धाय नमो धर्माय नमः संघाय ।

अथ ते प्रेतसत्त्वास्तेन कुशलमूलेन ते ते च्यवित्वा केचिद्देवेषूपपन्नाः । एकेभ्यो मनुष्येष्वेवं तिरश्चां संचोदयन्ति । एवं मनुष्याः संचोदयन्ति । गणनातिक्रान्ता देवमनुष्या भगवत्सकाशमुपसंक्रम्य भगवतः पादौ शिरसाभिवन्द्य निषण्णा धर्मश्रवणाय । तेन च समयेन गणनातिक्रान्ता देवमनुष्यकाया अनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयामासुः । गणनातिक्रान्ताश्चात्र बोधिसत्त्वाः समाधिक्षान्तिधारणीः प्रतिलब्धवन्तः ।

इति करुणापुण्डरीके महायानसूत्रे द्वितीयो
धारणीमुखपरिवर्तः ।

---

अथ खलु शान्तिमतिर्बोधिसत्त्वो महासत्त्वो भगवता सर्वधर्माभिसंस्कारे प्रतिप्रश्रब्धे भगवन्तमेतदवोचत् । को भगवान् हेतुः कः प्रत्ययो यदन्येषां बुद्धानां भगवतां परिशुद्धा बुद्धक्षेत्रा अपगतकलुषा अपगतपञ्चकषाया नानागुणव्यूहा बुद्धक्षेत्राः सर्वे चात्र बोधिसत्त्वा महासत्त्वा नानाविधगुणपरिपूर्णा नानासुखसमर्पिता नापि श्रावकप्रत्येकबुद्धानां नामापि विद्यते । कुतः पुनरुत्पत्तिः को भगवान् हेतुः कः प्रत्ययो यद्भगवान् पञ्चकषाये बुद्धक्षेत्रे उपपन्नः । आयुःकषाये कल्पकषाये सत्त्वकषाये दृष्टिकषाये क्लेशकषाये वर्तमाने अनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः चतसृश्च परिषदः त्रीणि यानान्यारभ्य धर्मं देशयति । कस्माद्भगवता परिशुद्धं बुद्धक्षेत्रं न परिगृहीतं अपगतपञ्चकषायं ।

भगवानाह । प्रणिधानवशेन कुलपुत्र बोधिसत्त्वाः परिशुद्धं बुद्धक्षेत्रं परिगृह्णन्ति प्रणिधानवशेन । परिशुद्धं बुद्धक्षेत्रं परिगृह्णन्ति महाकरुणासमन्वागतत्वात् कुलपुत्र बोधिसत्त्वा महासत्त्वा अपरिशुद्धं बुद्धक्षेत्रं परिगृह्णन्ति । तत् कस्माद्धेतो यथा मया प्रणिधानं कृतं येनाहमेतर्ह्येवं प्रतिकृष्टे पञ्चकषाये बुद्धक्षेत्र उपपन्नः । तच्छृणु साधु च सुष्ठु च मनसि कुरु भाषिष्येऽहं ते शान्तमते । साधु भगवन्निति शान्तमति बोधिसत्त्वो भगवतः प्रत्यश्रौषीत् भगवांस्तानिदमवोचत् । भूतपूर्व्वं किल पुनः कुलपुत्र गङ्गानदीवालिकासमेषु असंख्येयेष्वतिक्रान्तेषु अस्मिन् बुद्धक्षेत्रे धारणो नाम महाकल्पो बभूव तस्मिंश्च महाकल्पे बुद्धक्षेत्रे तस्यां चातुर्द्वीपिकायां अरनेमी नाम राजाभूच्चतुर्द्वीपकः चक्रवर्त्ती । तस्य खल्वरनेमिनः समुद्ररेणुर्नाम ब्राह्मणोऽभूत् पुरोहितः तस्य पुत्रो जातो द्वात्रिंशन्महापुरुषलक्षणैः समन्वागतः अशीतिभिरनुव्यञ्जनैर्विराजितः शतपुण्यलक्षणो व्यामप्रभः न्यग्रोधपरिमण्डलोऽसेचनकदर्शनः । जातमात्रस्य च देवशतसहस्रैः पूजां कृत्वा समुद्रगर्भ इति नाम स्थापितं सोऽपरेण समयेन विनिष्क्रम्य केशश्मश्रूण्यवतार्य्य काषायाणि वस्त्राण्याच्छाद्य अनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः । रत्नगर्भस्तथागत उत्पादि । धर्म्मचक्रप्रवर्त्तनेन च भगवान् बहुप्राणिकोटीनियुतशतसहस्राणि स्वर्गमोक्षफले प्रतिष्ठापितवान् । सोऽपरेण समयेन बहुश्रावककोटिनियुतशतसहस्रैः परिवृतः पुरस्कृतो ग्रामनगरनिगमजनपदराष्ट्रराजधानीषु चार्य्यं विचूर्य्यमाणोऽनुपूर्व्वेणान्यतरं नगरमनुप्राप्तो यत्रासौ राजा चक्रवर्त्ती वसति । तत्र वहिर्नगरस्य नातिदूरे जम्बूवनोद्याने रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धो विहरति सार्द्धमनेकैः श्रावककोटिनियुतशतसहस्रैरिति । अश्रौषीद्राजाऽरनेमी । रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धोऽस्माकं विजितमनुप्राप्तो जम्बूवनोद्याने विहरति । अनेकैः श्रावककोटिनियुतशतसहस्रैः सार्द्धं । यन्न्वनमहमुपसंक्रामयेयं उपसंक्रम्य तं तथागतं सत्कुर्य्याम् गुरुकुर्य्याम् मानयेयम् । अथारनेमी राजा राजर्द्ध्या महता च राजानुभावेनानेकैः प्राणिकोटिनियुतशतसहस्रैः परिवृतः पुरस्कृतो नगरान्निर्जगाम येन जम्बूवनोद्यानास्तेनोपजगामोपेत्य यावदेव यानस्य भूमिस्तावद्यानेन यात्वा पद्भ्यामेवारामं प्राविशद् येन रत्नगर्भस्तथागतस्तेनोपजगाम । उपेत्य रत्नगर्भस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य पादौ शिरसा वन्दित्वा त्रिःकृत्वः प्रदक्षिणीकृत्यैकान्ते न्यषीददेकान्ते निषण्णं राजानमरनेमिनं रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धो धार्म्म्या कथया संदर्शयति समादापयति समुत्तेजयति संप्रहर्षयति अनेकपर्य्यायेण धार्म्म्या कथया संदर्शयित्वा समादापयित्वा समुत्तेजयित्वा संप्रहर्षयित्वा तूष्णीमभूत् ।

अथ राजा अरनेमी उत्थायासनादेकांशमुत्तरासङ्गं कृत्वा पादयोर्निपत्य येन रत्नगर्भस्तथागतस्तेनाञ्जलिं प्रणम्य रत्नगर्भं तथागतमर्हन्तं सम्यक्सम्बुद्धमेतदवोचत् । अधिवासयतु मे भगवानिदं त्रैमासं सार्द्धं भिक्षुसंघेन । अहं भगवन्तमुपस्थास्ये । चीवरपिण्डपात्रशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैर्भिक्षुसंघं च अधिवासयति कुलपुत्र रत्नगर्भस्तथागतो राज्ञोऽरनेमिनः तूष्णीम्भावेन ।

अथ राजा अरनेमी रत्नगर्भस्य तथागतस्य तूष्णीम्भावेनाधिवासनां विदित्वा भगवतः पादौ शिरसाभिवन्द्य त्रिःकृत्वः प्रदक्षिणीकृत्वा भगवतोऽन्तिकात् प्रक्रान्तः । अथ राजा-

ऽरनेमी कोट्टराजानो भूयस्या मात्रयाऽऽत्मान् भट्टबलाग्रणीरञ्जनपदान् पौरुषेयानामन्त्र्यो-
वाच । यन्नूनं यूयमस्माद्भवन्तो जानीयुर्यथा रत्नगर्भस्तथागतोऽर्हन् सम्यक्संबुद्ध इमं त्रैमास्यं
सर्वोपकरणैर्मयानिमन्त्रितः सार्द्धं भिक्षुसंघेन सोऽहं यो मे कश्चिदुपभोगपरिभोग उपस्थान-
परिचर्यान्तःपुरं च गौरवेण तत्सर्वं भगवतो निवेदयामि भिक्षुसंघस्य च । यदपि युष्माकं
पौद्गलिकं उपभोगपरिभोगोपस्थानपरिचर्यान्तःपुरं गौरवेण तत्सर्वं भगवतो निर्यातयत
भिक्षुसंघस्य च । तैरपि निर्यातितं एकपरिच्छन्नमपि भद्रपुष्पारामं सर्वं जाम्बूनदसुवर्णमयं
कृत्वा तस्मिन्नेवोद्याने भगवतोऽर्थाय कूटागारमापयति सप्तरत्नमयं समन्ततः चतुर्दिशं चात्र
सप्तरत्नमयानि मापयति स्म । सर्वं चोद्यानं सप्तरत्नमयैर्वृक्षैरलङ्कृतं । ते च वृक्षा नाना-
प्रकारैर्वस्त्रैरलंकृताः नानावर्णैर्नानागन्धैर्नानाविधैश्च मुक्ताहारैर्नानाप्रकारैराभरणैर्नाना-
रत्नमयैश्चाभरणैर्विविधैः सुगन्धैः सर्वरत्नमयैश्च पुष्पफलैस्तदुद्यानमलङ्कृतवान् । सर्वं च
तदुद्यानमनेकविधैर्वस्त्रैरलङ्कृतमभूत् । नानापुष्पावकीर्णं नानापट्टदुष्यावरणप्रावारैश्च
चामराणि प्रावृतानि तस्यैव चङ्क्रमं बहिःकूटागारस्य भगवतः यथाभिमुखं पुरुषमात्रं प्रमाण-
सुवर्णमयीभिः सिकताभिः स्तरति । हस्तिरत्नमपि सर्वं च तं चङ्क्रमं पुष्पैरभिपूर्णं । भगवतः
पृष्ठतः स्थित्वा भगवत उपरि रत्नछत्रं धारयति । तच्च छत्रोऽलङ्कृतः नानाभिरत्नैर्नानाविधैश्च
मुक्ताहारैर्विचित्रैश्चाभरणैर्नानाविधैश्च माल्यैर्नानारङ्गैश्च पट्टैर्नानाविधैश्च दुष्यैरुपरचितं ।
तस्य छत्रस्य सप्तरत्नमयं दण्डं स्थापितमभूत् या चारनेमिनो राज्ञोऽग्रमहिषी सा भगवतः
पुरतः स्थित्वा भगवन्तं गोशीर्षचन्दनोरगसारचन्दनचूर्णैरवकिरमाणा यश्च राज्ञोऽरनेमिनो
मणिरत्नमभूत् प्रभास्वरं । ततः स्वयमेव भगवतः पुरतः स्थापयामास । ततस्तथा मणिरत्ना-
भया सर्वं तदुद्यानं सततमभिसमुदाचाराभावेन स्फुटमभूत् । शुद्धामपायं त्रिसाहस्रमहासा-
हस्रो लोकधातुः सर्वमिदं सततसमितं स्फुटमभूत् एकैकस्य च श्रावकस्य गोशीर्षचन्दनमयं
चन्दनस्य पादपीठं स्थापितं एकैकस्य च श्रावकस्य पृष्ठतः सर्वालङ्कृतो हस्तिनागः स्थापित
उपर्युपरि चङ्क्रमं पुरुषप्रमाणं स्थापितं यथा भगवतस्तथा एकैकस्य च श्रावकस्याग्रतः
सर्वालङ्कारविभूषितकन्या स्थापिता गोशीर्षोरगसारचन्दनचूर्णैरवकिरन्ति । एकैकस्य च
श्रावकस्याग्रतो वैदूर्यमणिः स्थापितः समन्ततश्चोद्यानस्याभ्यन्तरे नानाविधानि वाद्यानि
वाद्यन्ते बहिश्चोद्यानस्य समं मे परिनायकानां विहरति सार्द्धं चतुरङ्गेन बलकायेन ।

अथ खलु कुलपुत्र राजाऽरनेमी दिवसे दिवसे नगरान्निर्याति भगवतो दर्शनाय
वन्दनाय पर्युपासनाय । तस्य यावद्यानस्य भूमिस्तावद्यानेन यात्वा येनैव सवर्णोद्यस्य पद्मरागो-
द्यानं प्राविशत् प्रविश्य येन रत्नगर्भस्तथागतस्तेनोपसंक्रामोपेत्य रत्नगर्भस्य तथा-
गतस्यार्हतः सम्यक्संबुद्धस्य पादौ शिरसाभिवन्द्य भगवन्तं त्रीन् वारान् प्रदक्षिणीकृत्वा
रत्नगर्भस्य तथागतस्य स्वयं हस्तशौचमदात् स्वयं च प्रणीतेन प्रभूतेन खादनीयभोजनीयेन
सेन्द्रियेन स्वहस्तं सन्तर्पयति । ततो संप्रवारयति स्वहस्तं संतर्पयित्वा संप्रवारयित्वा भगवन्तं
भुक्तवन्तं विदित्वा धौतहस्तमपनीतपात्रपाणिं स्वयमेव व्यजनमादाय भगवन्तं वीजयामास ।
एकैकस्य च श्रावकस्य राजपुत्रसहस्रं कोट्टराजसहस्रं चैवं च पुरस्थानां कृत्वा व्यजनं गृहीत्वा
श्रावकान् वीजयति स्म । अथानन्तरमर्थ्यासिते अशीतिसहस्राणि प्राणिकोटिनियुतशत-

सहस्राण्यारामं प्रविष्टानि धर्मश्रवणाय गगनतले चानेकैर्देवकोटिनियुतशतसहस्रैः पुष्पवृष्टिरभिवृष्टा दिव्यानि वाद्यानि अभिवादयन्ति दिव्यानि च छत्राणि वासांसि आभरणानिरे प्रलम्बयन्ति। नीलग्रामसमाच्च यक्षाणां चत्वारिंशत्कृतसहस्राणि ये चन्दनदीपात्। गोशीर्षस्य च चन्दनस्य काष्ठान्यानयन्ति भगवतोऽर्थायाहारं प्रतिजाग्रति। भिक्षुसंघस्य च राज्ञो स्वयमेव राजाऽरनेमीर्भगवतः पुरतः स्थित्वा एकां दीपस्थालिकां शिरस्युपस्थापयित्वा द्वावंसयोर्द्वौ पाण्योर्द्वे चरणयोर्दीपस्थालीः सर्व्वरात्रीर्भगवतः पुरतो दीपं ज्वालयमानो भगवतोऽनुभावेन क्लान्तकाय एवंरूपं कायसुखं प्रतिसंवेदयति स्म। तद्यथापि नाम तृतीयध्यानसमापन्नस्य भिक्षोरेवमक्लान्तकायः अक्लान्तचित्तो मासत्रयं भगवन्तमुपस्थितवान्। एवं सहस्रं राजपुत्राणां चतुरशीतिश्च कोट्टराजसहस्राणि। अन्यानि च प्राणिकोटिनियुतशतसहस्राणि एकैकं श्रावकं राजकीयेनोपकरणेन मासत्रयमेवंरूपेणोपस्थानेनोपस्थितवन्तः यथा राजाऽरनेमी रत्नगर्भं तथागतमुपस्थितवान्। तथाग्रमहिषी देवी मासत्रयं गन्धपुष्पैरुपस्थितवती। एवमन्यैरपि बहुकन्याकोटिनियुतशतसहस्रैरेकैकः श्रावको मासत्रयं पुष्पगन्धैरुपस्थितः।

अथ खलु कुलपुत्र राजाऽरनेमी त्रयाणां मासानामत्यये चतुरशीतिं जाम्बूनदमयानि निष्कसहस्राणि भगवतो निर्यातयति। चक्ररत्नचक्रपूर्व्वङ्गमानि च सुवर्णमयानि चतुरशीतिश्चक्ररत्नसहस्राणि भगवतो निर्यातयति। हस्तिरत्नपूर्व्वङ्गमानि चाशीतिनागसहस्राणि सर्व्वाण्येतानि भगवतो निर्यातयति। अश्वरत्नपूर्व्वङ्गमानि चतुरशीतिरश्वसहस्राणि भगवतो निर्यातयति। मणिरत्नपूर्व्वङ्गमानि चतुरशीतिः सूर्य्यकान्तिमणिसहस्राणि भगवतो निर्यातयति स्म। गृहपतिरत्नपूर्व्वङ्गमानि चतुरशीतिराजपुत्रसहस्राणि भगवतो निर्यातयति स्म। उपस्थानाय परिणायकरत्नपूर्व्वङ्गमानि चतुरशीतिकोट्टराजसहस्राणि भगवत उपस्थानाय निर्यातयति स्म। प्रचु(शु)रनगरपूर्व्वङ्गानि चतुरशीतिनगरसहस्राणि भगवत उपजीव्यानि निर्यातयति। भिक्षुसंघस्य च चतुरशीतिरत्नमयानि कल्पवृक्षसहस्राणि चतुरशीतिरत्नराशिपुण्यसहस्राणि चतुरशीतिसप्तरत्नमयछत्रसहस्राणि चतुरशीतिदुःशाराणां राजार्हाणां सहस्राणि चतुरशीतिसहस्राणि रत्नमयानां मालानां आभरणपीठशीर्षनयनकुण्डलसुवर्णसूत्रमुक्ताहारे पादशय्यापादपीठः भृङ्गभेरीवाद्यशंखघण्टाध्वजाङ्कुशाताम्रदीपस्थालीका भगवतो निर्यातयति स्म रत्नमयाः शकुनाः रत्नमयाश्च मृगाश्चतुरशीतिव्यजनसहस्राणि भगवतो निर्यातयति स्म। चतुरशीतिरसायनसहस्राणि रत्नस्तंभस्य तथागतस्यार्थेतः मध्यक्रमस्तुठ्य निर्यातयति स्म। एवं च प्राह भगवन् बहुकृत्यो बहुकरणीयः समस्तु मे भगवानस्माकमुपवनेऽभिरमतु। भगवानस्मिन्नुपवने रमतु नित्यं पुनरप्यहं भगवन्तमुपसंक्रमिष्ये दर्शनाय वन्दनाय पर्युपासनाय च। यत्र राज्ञोऽरनेमिनः पुत्रसहस्रं भगवतः पादयोर्निपत्य भगवन्तमेवैकमिदमेवायाचत्। अधिवासयत्वस्माकमेकैकस्य त्रैमास्यं वयं भगवन्तमुपस्थास्यामः सर्व्वोपकरणैः सार्द्धं भिक्षुसंघेन। अधिवासयति भगवांस्तेषां राजपुत्रसहस्रस्य तूष्णीम्भावेन। तेषामधिवासितं भगवता विदित्वाथ राजाऽरनेमी भगवतः पादौ शिरसाभिवन्द्य भिक्षुसंघञ्च त्रिःकृत्वः प्रदक्षिणीकृत्य भगवतोऽन्तिकात् प्रक्रान्तः।

अथ तेषां राजपुत्राणां ज्येष्ठो निमिषो नाम्ना भगवन्तं त्रैमासमेवंरूपेणोपस्थानेनोप-तिष्ठति भिक्षुसंघं च धर्मं च श्रोतुं । अथ पुत्रपुत्र भगवतो रत्नगर्भस्य तथागतस्य पिता समुद्ररेणुर्नाम ब्राह्मणः स सर्व्वं जम्बूद्वीपमन्वाहिण्डय स्त्रीपुरुषदारकदारिकाभ्यः पिण्डपातं याचते । स तं पिण्डपातपरिगृहीतन्तं सर्व्वं जम्बूद्वीपनिवासिलोकं त्रिशरणगमने प्रति-ष्ठापयति । प्रतिष्ठापयित्वानुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयति । तेनैवमन्वाहिण्डय-तान् स यांश्चिज्जम्बूद्वीपे मनुष्यभूताः स्त्रियः समुद्ररेणुना ब्राह्मणेन पिण्डकेन न परिगृहीतो यो वा न त्रिशरणगमने प्रतिष्ठापितः । यश्च चानुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयति । तेनैवमन्वाहिण्डय तेन स कश्चिज्जम्बूद्वीपे मनुष्यभूताः स्त्रियः समुद्ररेणुना ब्राह्मणेन पिण्ड-केन न परिगृहीतो यो वा न त्रिशरणगमने प्रतिष्ठापितः । यश्च चानुत्तरायां सम्यक्-सम्बोधौ चित्तं नोत्पादयितुं । यो सम्बोधौ चित्तमुत्पादयति । सम्यगनुत्तरायां सम्यक्सम्बोधौ चित्तं नोत्पादयितुं । यो चानुत्तरे यानं समादापितो न प्रतिष्ठापितः । षड्भूमाणिकोटिनियुतशतसहस्राणि त्रिशरण-सम्बोधौ चित्तमुत्पादयति । सम्यगनुत्तरायां सम्यक्सम्बोधौ समादापितानि निवेशितानि क्रियावस्तुषु स्थापितानि । एवमनुत्तरायां सम्यक्सम्बोधौ समादापितानि निवेशितानि प्रतिष्ठापितानि । अनिमिषोऽपि राजकुमारो भगवन्तं मासत्रयमेवंरूपेणोपस्थानेनोपस्थित-वान् सार्द्धं भिक्षुसंघेन । यथा राज्ञारनेमिना सोऽपि तथापि मासानामत्ययेन चतुरशीति-सहस्राणि निर्यातयति सर्व्वसौवर्णानि नगराणि दिव्यानि च हस्त्यश्वमणिस्त्रीपुरुष-सत्काररत्नसहस्राणि । एवं सूर्य्यकान्तमणि-प्रतिपरिणायकरत्नानि स्थापयित्वा चतुरशीतिहस्तिसहस्राणि । एवं सूर्य्यकान्तमणि-पतिपरिणायकरत्नानि स्थापयित्वा चतुरशीतिसहस्रधनरत्नपीठमौर्णनयनकुण्डलसुवर्णसूत्रमुक्ताहारो कन्याकुमारकल्पवृक्षपुष्पराशिच्छत्रध्वजमाल्याभरणरत्नपीठशीर्षनयनकुण्डलसुवर्णसूत्रमुक्ताहारो यानमय्यापादपीठभाजनभेरीवाद्य-शङ्ख-पटहध्वजशृङ्गारारामश्रीपस्थालिकादीनि नानारत्न-याम्य प्रभुना नानामृगाथ रत्नमया रसायनाथ एकैकमय चतुरशीतिसहस्राणि भगवतो निर्या-तितवान् एवं भिक्षुसंघस्य च ।

अथ स राजकुमारो भगवन्तं समापितवान् भिक्षुसंघं च अनिमिषो राजकुमारो भगवन्तमेवंरूपेणोपस्थानेनोपस्थितवान् सार्द्धं भिक्षुसंघेन । यथा राज्ञाऽरनेमिना तथैव दक्षिणा दत्ता अनन्ता । एवमिन्द्रगणेन मासत्रयं भगवानुपस्थितो विभवश्च परित्यक्त पेयालं तथैवानङ्ग अभयः । अम्बरः । अम्बजः । सिद्धः । सिंधः । मार्दवः । यंगताः माध्यवः । मानवो मार्थ सो माजवः । अरवः । आजवः । सुपवः । अर्पणः । अलिन्दः सेरजः । रैवाज. । चन्द्रनेमी । सूर्य्यनेमी । इन्द्रनेमी वज्रनेमी सान्तनेमी श्यामनेमी जवनेमी । रथनेमी । राहुरकवलः । राहुचित्रः । दानचित्रः । राजधानः । राजधनः माध्यवः । रत्नकः कायः अयमाः । यज्ञवः अजलः । यमेपः । यध्वजः । यमानः । यस्त. . नमज्योतिः । अरजनः । ध्यावदरनेमिनो राज्ञः पुत्रसहस्रेण एकैकेन रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्ध. सार्द्धमप्रमेयं भिक्षुसंघेन । एवंरूपेण भगवन्त उपस्थानेनोपस्थितः चीवरपिण्ड-पातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारैर्मासत्रयं यथा ज्येष्ठेन राजपुत्रेण । तथैवैकैकश्चतुरशीतिः सुवर्णमयाश्वकसहस्राणि विस्तरेण यावच्चतुरशीतिरसायनसहस्राणि भगवतो निर्यातितानि भिक्षुसंघस्य च । एवंरूपेण महाप्रसादेन प्रणिधानं कृत्वा केचिद्देवत्वं केचिच्छक्रत्वं केचि-न्मारत्वं केचिच्चक्रवर्त्तिराज्यं केचिन्महाभोगतां केचिच्छ्रावकयानं केचित् प्रत्येकबुद्धयान.

प्रार्थयन्ति अधिमुमानाश्च द्वौ वर्षशतो पञ्चपञ्चाशच्च वर्षाणि भगवन्तं समापयन्ति भिक्षुसंघं च। तत्काले समुद्ररेणुर्ब्राह्मणोऽग्रपुरोहितोऽभ्यागतोऽद्राक्षीत्तं ते राजपुत्रैरुपस्थितं दृष्ट्वा सर्व्वोपकरणैरुपनिमन्त्रयते। यदुत चीवरपिण्डपातशय्यासनग्लानप्रत्ययभैषज्यपरिष्कारैः सार्द्धं भिक्षुसंघेन। अधिवासयति भगवान् पितुरग्रपुरोहितस्य तूष्णीम्भावेन।

अथ समुद्ररेणुर्ब्राह्मण एवंरूपेण सर्व्वोपकरणसम्पन्नेनोपस्थानेन भगवन्त उपस्थित- चीवरपिण्डपातशय्यासनग्लानप्रत्ययभैषज्यपरिष्कारैः सार्द्धं भिक्षुसंघेन। अथ खलु कुलपुत्रा- परेण समयेन समुद्ररेणोर्ब्राह्मणस्यैवं चेतसः परिवितर्क उदपादि। मया तावद्बहुप्राणकोटि- नियुतशतसहस्राणि अनुत्तरायां सम्यक्सम्बोधौ समादापितानि। नचाहमद्य राज्ञोऽस्यैमिनः प्रणिधानं जाने। किमयं प्रार्थयते देवत्वं वा उत शक्रत्वं वा मारत्वं महाभागतां वा श्रावकयानं वा प्रत्येकबुद्धयानं वाऽनुत्तरां सम्यक्सम्बोधिमाकाङ्क्षते। कञ्चिदहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः अतीर्णान् सत्त्वांस्तारयेयम् अमुक्तान्मोचयेयं जातिजराव्याधि- मरणशोकपरिदेवदुःखदौर्मनस्योपायासेभ्यः। अपरिनिर्वृतान् सत्त्वान् परिनिर्व्वापयेयम् कञ्चित् अप्रणिवेदयतु देवानां यक्षो वा नागो वा बुद्धो वा श्रावको वा ब्राह्मणो वा किन्तावद्राजा देवश्रियं काङ्क्षते उत मनुष्यश्रियं अथ श्रावकत्वं।

अथ प्रत्येकबुद्धभूमिमथवानुत्तरां सम्यक्सम्बोधिं। अथ कुलपुत्र समुद्ररेणुर्ब्राह्मणः अग्रपुरोहितः स्वप्ने तथारूपमवभासमद्राक्षीत् येनावभासेन दशसु दिक्षु गङ्गानदीवालिका- समेषु बुद्धक्षेत्रेषु बुद्धान् भगवतः पश्यति। ते च बुद्धा भगवन्तः तस्य ब्राह्मणस्य पद्मानि सुवर्णपत्राणि रूप्यदण्डानि वैडूर्य्यकर्णिकानि अश्मगर्भकेशराणि प्रेषयन्ति। सर्व्वेषु च तेषु पद्मेषु सूर्य्यमण्डलं दृश्यते। सूर्य्यमण्डलस्योपरि सप्तरत्नमयं छत्रं संस्थितं। एकैकस्मात्सूर्य्य- मण्डलात् षष्टिरश्मिकोट्यो निश्चरन्त्यः सर्व्वास्तस्य ब्राह्मणस्य वक्त्रे प्रविशन्ति। सहस्र- योजनप्रमाणमात्मभावमात्मानं समनुपश्यति। परिशुद्धं। तद्यथा परिशुद्धमादर्शमण्डल स्वकायस्य च कुक्षौ षष्टिबोधिसत्त्वकोटिनियुतशतसहस्राणि पद्मेषु पर्य्यङ्कोपविष्टा ध्या- ध्यायमानां पश्यति। तानपि सूर्य्यविमानात्मनः शिरसि माला छत्रस्योपरि आकाशे यावद्ब्रह्मलोकपर्य्यन्ते स्थितं पश्यति। नानापद्मानि सानन्तके स्थितानि पश्यन्ति। तेभ्यश्च पद्मेभ्यो दिव्यान्यतिक्रान्तमानुषाणि तूर्य्याणि निश्चरन्ति शृणोति च तत्र च राजानमरनेमिं. पश्यति। रुधिरम्रक्षितेन कायेन धावन्तं सूकरमुखेन विविधान् बहुप्राणिनो भक्षयन्तं भक्षयित्वा एरण्डवृक्षमूले निषण्णं विविधाश्च प्राणिनः समागम्य तं राजानं भक्षयन्ति। यावदस्थिरं कालावशेषं कृत्वा छोरयन्ति। एवं पुनः पुनस्तथैव प्रादुर्भवन्तं सूकरमुखं रुधिरम्रक्षितेन कायेन बहुविधान् प्राणिनो भक्षयित्वा एरण्डमूले निषण्णं विविधैः प्राणिभिः आत्मानमस्थिकङ्कालावशिष्टं कृत्वा छोरितं। पुनरपरं राजपुत्रान् पश्यति। सूकरमुखेनापरे गजमुखेनापरे महिषमुखेनापरे सिंहमुखेनापरे वृषमुखेनापरे शृगालमुखेनापरेऽश्वमुखेनापरे मर्कटमुखेन धावति। शोणिताभ्युक्षितगात्रानानेकविधान् प्राणिनो भक्षयित्वा एरण्डवृक्षमूले निषण्णान् विविधैः प्राणिभिर्भक्ष्यमाणानस्थिकङ्कालावशिष्टानुपपन्नान् पुनरपि तेनैव कायेन स्थितान्। तथैव प्राणिनो भक्षयतः पश्यति। अन्यांश्च राजपुत्रान् पश्यति महिषरथाभि-

दडान् सुमनापुष्पाभ्यलंकृतान् कुर्वन्त दक्षिणाभिमुखान् गच्छतः । शक्रब्रह्मलोकपालो गत्वा ब्राह्मणस्य कथयन्ति । इमानि ब्राह्मणपद्मानि भागं कुरु भागं कृत्वा ततः प्रथमं राज्ञः संविभागमेकं पद्ममनुप्रयच्छ । तत एकामपि राजपुत्राणामेकैकं पद्मं दद । अव-शिष्टानि कोट्टराजानां प्रयच्छ । अपराद्भुतस्य श्रुत्वा ब्राह्मणः प्राह । यथाज्ञापयन्ति देवाः । अथ स ब्राह्मणपद्मानि भोजयमान एव प्रतिबुद्धः सन् विचिन्तयमान उत्थायासनात् पुनर्विचिन्तयन्ति हीनप्रणिधिरयं राजा चक्रवर्त्ती संसारसुखानिरतो हीनो वाध्याधिमुक्तिः सार्द्धं एकत्ये राजपुत्रैरेकत्याः पुना राजपुत्राः श्रावकयानमाकाङ्क्षन्ति ये मया महिषर्षाभि-वद्धा दृष्टाः सुमनापुष्पैरलङ्कृता दक्षिणाभिमुखा गच्छन्ति । यत्र मया सर्व्वसत्त्वार्थं महायान-आरम्भं कृतं । यत्र मयाऽधस्त्रियात् वर्षशतात् जम्बूद्वीपस्य । हिस्यडत्र सर्व्वसत्त्वा अनुत्तरायां सम्यक्सम्बोधौ यावत् प्रतिष्ठापिताः । तदेवं मया सर्व्वजम्बूद्वीपगतानेकानि प्राणिकोटि-नियुतशतसहस्राणि त्रिषु पुण्यक्रियावस्तुषु समादापितानि निवेशितानि प्रतिष्ठापितानि । तस्य तं निमित्तं येन मया स्वप्ने महावभासो दृष्टः दशसु दिक्षु बुद्धा भगवन्तो दृष्टाः । यत्र मया सर्व्वं जम्बूद्वीपमन्वाहिण्डय स्त्रीपुरुषदारकदारिकाभ्यः पिण्डपातं याचित्वा बहुप्राणि-कोटिनियुतशतसहस्राणि त्रिशरणक्रियावस्तुषु स्थापितानि विनीतानि निवेशितानि प्रति-ष्ठापितानि । यत्र मया तथागतोऽर्हन् सम्यक्सम्बुद्धः सप्तवर्षाण्युपनिमन्त्रितः । सर्व्वोप-करणैः सार्द्धं भिक्षुसंघेन । तेन मम दशभ्यो दिग्भ्यः । अन्येभ्यो बुद्धक्षेत्रेभ्यः बुद्धं भगवद्भिः पद्मान्यनुप्रेषितानि । यत्र मयानुत्तरायां सम्यक्सम्बोधौ प्रणिधानं कृतं । तेन ते बुद्धा सप्तरत्नमयानि छत्राणि विसर्ज्जयन्ति । ये पुनर्मया तेषु पद्मेषु सूर्य्यविम्बा दृष्टा यत्र रश्मयो मुखे प्रविशमाना दृष्टाः । यत्रासौ महानात्मभावो दृष्टः । यत्र सूर्य्यविम्बमाला दृष्टा यत्र कुक्षौ बोधिसत्त्वकोटिनियुतशतसहस्राणि पद्मेषु पर्य्यङ्कनिषण्णानि ध्यायमानानि । इमा एवंरूपाः स्वप्ना दृष्टाः यत्र मे शक्रब्रह्मलोकपाला दृष्टा आज्ञापयन्तीमानि पद्मानि भागं कुरु । यत्र मया तानि पद्मानि भागं कृत्वा दत्तानि । योऽन्वहमिमाः स्वप्ना दृष्टा ये भगवत आख्याहि किं हेतुकाः किं प्रत्ययाः मयैवंरूपाः स्वप्ना दृष्टा योऽन्वहं तथागतं पृच्छेयं ।

अथ समुद्ररेणुर्ब्राह्मणः तस्या एव रात्र्या अत्ययेन भोजनमङ्गीकृत्वा कल्यत एव येन भगवाँस्तेनोपजगाम उपेत्य स्वयमेव भगवतोदकशौचमुपनामयति । भिक्षुसंघस्य च दकशौचमुपनीय प्रभूतेन खादनीयभोजनीयेन स्वहस्तं सन्तर्पयति संप्रवारयति सन्तर्प्य-यित्वा भिक्षुसंघमनेकपर्य्यायेण सन्तर्प्य संप्रवार्य्य भगवन्तं विदित्वा भिक्षुसंघं च धौतहस्त-मपनीतपात्रं नीचमासनं गृहीत्वा भगवतः पुरतो निषण्णो धर्म्मश्रवणाय । अथ राजाऽरनेमी सत्रैवाभ्यागतः सार्द्धं पुत्रसहस्रेणानेकैश्च प्राणिसहस्रैः परिवृतः पुरस्कृतः स यावद्यानस्य भूमिस्तावद्यानेन यात्वा यानादवतीर्य्य पद्भ्यामेवारामं प्राविशत् प्रविश्य च येन भगवां-स्तेनोपजगामोपेत्य भगवतः पादौ शिरसा वन्दित्वा भिक्षुसंघस्य च भगवतः पुरतः निषण्णो धर्म्मश्रवणाय । अथ समुद्ररेणुर्ब्राह्मणो यथा दृष्टान् स्वप्नान् भगवतो निवेदयति ।

भगवानाह । यत्त्वं ब्राह्मणोऽद्राक्षीत् महान्तमवभासं येनावभासेन गङ्गानदी-वालिकासमेषु बुद्धक्षेत्रेषु बुद्धा भगवन्तो दृष्टा तव पद्मानि विसर्ज्जयति । तेषु च पद्मेषु

सूर्य्यविग्रहा दृष्टाः रश्मयः प्रमुञ्चमानास्ते च रश्मयस्तवमुखे प्रविशन्ति । यत्त्वया ब्राह्मण अर्धत्रिकायां वर्षशतान् जम्बूद्वीपमाहिण्डता तेन त्वया गणनातिक्रान्ताः सत्त्वा त्रिषु पुण्यक्रियावस्तुषु निवेशिताः प्रतिष्ठापिताश्च गणनातिक्रान्ताश्च सत्त्वा अनुत्तरायां सम्यक्सम्बोधौ समादापिता निवेशिता प्रतिष्ठापिताः । यश्च त्वया सर्व्वसत्त्वार्थं महायज्ञयारम्भः कृतस्तेन त्वं ब्राह्मण बुद्धा भगवन्तो व्याकरिष्यन्त्यनुत्तरायां सम्यक्सम्बोधौ । ये दशसु दिक्षु गङ्गानदीवालिकासमेषु लोकधातुषु तिष्ठन्ति यापयन्ति धर्म्मं च देशयन्ति यैस्तव पद्मानि विसर्जितानि सुवर्णपत्राणि रूप्यदण्डानि वैडूर्य्यकर्णिकानि अश्म गर्भकेशराणि । तेषु च सर्व्वेषु पद्मेषु सूर्य्यविग्रहा दृश्यन्ते । इदं तव स्वप्नस्य पूर्व्वनिमित्तं । यत्त्वं ब्राह्मणाद्राक्षीत् स्वप्ने ये दशसु दिक्षु नदीवालिकासमेषु लोकधातुषु बुद्धा भगवन्त स्तिष्ठन्ति ध्रियन्ते यापयन्ति धर्म्मं च देशयन्ति तैर्बुद्धैर्भगवद्भिः सप्तरत्नमयानि छत्राणि विसर्जितानि । यानि छत्राणि तवोपरिष्टादाकाशे यावद्ब्रह्मलोकपर्य्यन्तं संतिष्ठन्ति । यथामेव रात्रौ त्वं ब्राह्मणानुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे बोत्स्यसे तस्यामेवरात्रौ दशसु दिक्षु गङ्गानदीवालिकासमेषु लोकधातुषूदारः कीर्त्तिशब्दश्लोकोऽभ्युद्गच्छते । उपरि च यावद्ब्रह्मलोकपर्य्यन्तं कृत्वा ते शक्यन्ते तव मूर्द्धानं व्यवलोकयितुं ब्रह्मादिभिर्देवलोकैरपि । इदं तव स्वप्नस्य पूर्व्वनिमित्तं । यत्त्वं ब्राह्मणाद्राक्षीन्महात्ममात्मभावं यावद्ब्रह्मलोकं यत्र सूर्य्यमण्डलानां माला शिरसि बद्धा । तद्यत्त्वया गणनातिक्रान्ताः सत्त्वाः समादापिता अनुत्तरायां सम्यक्सम्बोधौ ते च तत्राभिसम्बुद्धबोधेर्बोद्धाय बुद्धक्षेत्रपरमाणुरजः समेषु लोकधातुषु दशसु दिक्षु स्थिता अनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यन्ते । ये च ते त्वया बोधौ समादापिता । ते तत्राभीक्ष्णं वर्णमुदाहरिष्यन्ति । अनेन तथागतेनार्हता सम्यक्सम्बुद्धेन वयं प्रथममनुत्तरायां सम्यक्सम्बोधौ समादापिता येनास्मै तथानुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धा एषचास्माकं कल्याणमित्रं ते बुद्धा भगवन्तो बोधिसत्त्वान् विसर्जयिष्यन्ति तव पूजाकर्म्मणे । ततस्ते बोधिसत्त्वा महासत्त्वा विविधैर्बोधिसत्त्वविकुर्व्वितैस्तव पूजां कृत्वा तव सकाशाद्धर्म्मं श्रुत्वा नानाविधाः समाधीर्धारणीः क्षान्तीश्च प्रतिलप्स्यन्ते । ते बोधिसत्त्वा महासत्त्वाः स्वकस्वकेषु बुद्धक्षेत्रेषु गत्वा तव वर्णमुदाहरिष्यन्ति घोषमनुश्रावयिष्यन्ति । इदं ब्राह्मण तस्य स्वप्नस्य पूर्व्वनिमित्तं यत्त्वया ब्राह्मण स्वप्ने दृष्टो बोधिसत्त्वकोटिनियुतशतसहस्राणि तानि तव कुक्षौ प्रविश्य पद्मेषु पर्य्यङ्कं बोपविष्टा ध्यायन्ति । अभिसम्बुद्धबोधिश्च त्वं ब्राह्मण बहुप्राणिकोटिनियुतशतसहस्राणि यानुत्तरायां सम्यक्सम्बोधौ समादापयिष्यसि । अवैवर्त्तिकानि स्थापयिष्यस्यनुत्तरायां सम्यक्सम्बोधौ ते तव परिनिर्वृतस्य ब्राह्मणानुत्तरेण परिनिर्व्वाणेन । बुद्धक्षेत्रपरमाणुरजःसमेषु कल्पेषु पश्चाद्दशसु दिग्स्वन्येषु बुद्धक्षेत्रेषु ते बुद्धा भगवन्तो धर्म्मराज्यं कारयन्तस्तव वर्णं भाषिष्यन्ति । एवमसंख्येयेषु कल्पेष्वतिक्रान्तेषु । एवंनामा तथागतोऽभूदर्हन् सम्यक्सम्बुद्धः येन तथागतेनार्हता सम्यक्सम्बुद्धेन प्रथममनुत्तरायां सम्यक्सम्बोधौ समादापिता विनीता निवेशिताः प्रतिष्ठापिताः । अवैवर्त्तिकाश्च स्थापिता येन वयमेतर्ह्यनुत्तरां सम्यक्सम्बोधिमभिसंबुद्धाः धर्म्मराज्यं च प्रतिलब्धाः । इदं ब्राह्मण तव स्वप्नस्य पूर्व्वनिमित्तं । यत्त्वं ब्राह्मण स्वप्ने दृष्टवान् । शूकरमुखेन मार्जारमुखेन रुधिरपविलेन

शास्त्रेणानेकविधान् प्राणिनो भक्षयित्वा शीतनरकवृक्षमूले निषण्णास्तेऽप्यन्यैस्त्रिविधैः प्राणिभिर्भक्ष्यन्ते यावदस्थिकङ्कालावशेषा उत्पद्यन्ते । पुनरप्याप्यायितकाया रुधिरोत्पन्नेन कायेन यावत्सूचीमुखेन बहुविधान् प्राणिनो भक्षयित्वा पुनर्योनघोरवृक्षमूले निषण्णा विविधैश्च प्राणिभिः खाद्यन्ते । ते त्वया मोहपुरुषो त्रिविधपुण्यक्रियावस्तुनि समादापिता प्रतिष्ठापिता । दाने दमे संयमे च देवेषु च्यवनदुःखमभिलषन्ति । मनुष्येषु जराव्याधिमरण-प्रियसंप्रयोगप्रियविनाभावदुःखं प्रेतेषु क्षुत्पिपासादुःखं तिर्यक्ष्वन्योन्यभक्षणदुःखं नारकेषु छादनच्छेदनवधबन्धननानाविधकारणादिदुःखमभिलषन्ति त्रिविधे च पुण्यक्रियावस्तुनि प्रति-ष्ठापिता देवेषु दैवराज्यमभिलषन्ति मनुष्येषु चैकद्वीपैश्वर्यमाकाङ्क्षन्ते । तेषां तत्र सर्वसत्त्वाः परिभोगं गच्छन्ति तेऽपि च सर्वसत्त्वानां नाहारपरिभोगं गच्छन्ति । एवं ते मोहपुरुषाः सर्वे त्वया त्रिविधे पुण्यक्रियावस्तुनि प्रतिष्ठितास्त्वत्रोपासका भविष्यन्ति । एवं ब्राह्मण मम स्वप्नस्य पूर्वनिमित्तं । यत्त्वं ब्राह्मण स्वप्नमद्राक्षीः अपरे मनुष्या महिषरथाभिरूढाः सुमनोमालाबद्धशिरसः । अपथेन दक्षिणाभिमुखं गच्छन्ति । तेऽपि त्वया ब्राह्मण कुलपुत्राः त्रिषु पुण्यक्रियावस्तुषु प्रतिष्ठापिताः केवलमात्मदमनार्थमात्मशमनार्थं श्रावक-यानसंप्रस्थिताः तेषां श्रावकयानसंप्रस्थितानां ब्राह्मण पुद्गलानामिदं पूर्वनिमित्तं ॥

अथ खलु कुलपुत्र ब्राह्मणः समुद्ररेणुः राजानमरनेमिनमेतदवोचत् । दुर्लभं महाराज मनुष्यत्वं । दुर्लभा क्षणसम्पत् दुर्लभमुदुम्बरपुष्पसदृशानां तथागतानामर्हतां सम्यक्सम्बुद्धानां प्रादुर्भावो लोके दुर्लभः कुशलधर्मे छन्दः । दुर्लभं सम्यक्प्रणिधानं । दुःखोत्पत्तिभूतं महाराज देवराजत्वं दुःखोत्पत्तिभूतं महाराज मनुष्येषु चैकद्वीपैश्वर्यराजत्वं । दुःखोत्पत्तिभूतं हि द्विचतुर्द्वीपिकराजत्वं । चिरं महाराज संसारदुःखमनुभवितव्यं । अनवस्थिता महाराज वायुवेगचपलाश्च मनुष्यसंपदुदकचन्द्रोपमाश्च बालाः पञ्चभिः कामगुणैरतृप्ता विषयेषु माया दैवमानुषीं श्रियमभिलषन्ति । ते बालाः पुनःपुनर्नरकेषु कारणादुःखमनुभवन्ति तिर्यक्षु संमोहदुःखं प्रेतेषु क्षुत्पिपासादुःखं मनुष्येषु प्रियविप्रयोगदुःखं देवेषु च्यवनदुःखं पुनर्गर्भवास-दुःखं परस्परशौर्यप्रपातनदुःखं । अन्योन्यभक्षणदुःखं । एवं भ्रममाणा बाला दुःखमनुभवन्ति । सत्कायाद्वैतोः कल्याणमित्रविरहिताः सम्यक्प्रणिधानं न कुर्वन्ति । न व्याप्नुवन्ति अप्राप्तस्य प्राप्तये ऽनधिगतस्याधिगमाय असाक्षात्कृतस्य साक्षात्क्रियायै । एवं मूर्खबालाः क्षिप्रमेव बोधि-चित्तेन यत्र सर्वदुःखक्षयो भवति संसारेण च न खिद्यन्ते नोद्विजन्ति यत्र पुनःपुनर्दुःखोत्-पत्तिर्भवति परीत्तश्च महाराज यथा संसारः सर्वदुःखानां भाजनभूतः । तस्मात्त्वमिदं महाराजकृताधिकारो भगवतः आसनेऽवरोपितकुशलमूलस्त्रिषु रत्नेषु लब्धप्रसादः । भगवतो-दत्तदानो महाभोगतायै रक्षितशीलः स्वर्गोपपत्तिप्रतिलाभायाश्रुतो भगवतोऽन्तिकाद्धर्मं प्रज्ञा महाधर्मप्रतिलाभाय ते समुत्पत्स्यन्ते । यस्मात्त्वं महाराज उदाराशयानुकरणायां सम्यक्सम्बोधौ चित्तं । आह ॥ अलं ब्राह्मण नाहं ब्राह्मणानुत्तरां सम्यक्सम्बोधिमभिलष्यामि संसारा-भिरतः यन्मया ब्राह्मण मया दानं दत्तं शीलं रक्षितं धर्मः श्रुतः दुर्लभा हि ब्राह्मणानुत्तरा सम्यक्सम्बोधिः । द्विरपि समुद्ररेणु ब्राह्मणो राजानमाह । शुद्धो महाराज बोधिमार्गः आशयेन प्रणिधानं कर्त्तव्यं परिपूर्णाभिप्रायः समाधेरध्याशयेन विशुद्धः ऋजुः समार्गः ।

अशठः शुद्धः समार्गः क्लेशप्रवाहकत्वात् विपुलोऽसौमार्गः । अनावरणत्वात् समवसरणः समार्गः चिन्तनया निर्भयः समार्गः सर्व्वपापाकरणतया । सुमृदुः समार्गः दानपारमितया । शीतलः समार्गः शीलपारमितया । निराश्रयः समार्गः क्षान्तिपारमितया । अधिष्ठानाश्रयः समार्गः वीर्य्यपारमितया । अनाविलः समार्गः ध्यानपारमितया । सुविदितः समार्गः प्रज्ञापारमितया । सुप्रपन्नः समार्गो महामैत्र्यास्वभावज्ञानानुगतः समार्गः महाकरुणया । सुशान्न्दितः समार्गः । महामुदितया । अक्लिष्टः समार्गः उपेक्षया अपगतकण्टकः समार्गः कामव्यापादविहिंसावितर्कैः क्षेमंगमनः समार्गोऽप्रतिहतचित्ततया धूर्त्तविरहितः समार्गः रूपशब्दगन्धरसस्पर्शविहितत्वात् निहतमारप्रत्यर्थिकः समार्गः आत्मायतनसुविसृष्टत्वात् । सुप्रबोधः सुमार्गः अविद्यान्धकारनिरावरणत्वात् दृढवीर्य्यसत्त्वचित्तगमनः समार्गः । अपगतश्रावकप्रत्येकबुद्धमनसिकारत्वात् उत्सोढः समार्गः सर्व्वतथागताधिष्ठितत्वान्महारत्ननिष्पादकः समार्गः सर्व्वतथागताधिष्ठितत्वान्महारत्ननिष्पादकः समार्गः सर्व्वज्ञतारत्नानुकूलत्वात् सदा प्रकाशितः समार्गः असङ्गज्ञानस्य भगवतः कुशलमूलदेशकानुचीर्णः समार्गः सर्व्वतथागतानुगृहीतत्वात् । सुप्रक्लेशानुकूलविगतः समार्गः । अनुनयप्रतिघप्रहीणत्वात् निहतरजः समार्गः व्यापादखिलक्रोधापगतत्वात् सुगतिगमनीयः समार्गः सर्व्वाकुशलविरहितत्वात् क्षेमङ्गमो महाराजसंबोधिमार्गः निर्व्वाणपर्य्यवसानः उत्पादय महाराज बोधिचित्तं । राजा प्राह । अयं ब्राह्मण तथागतः अशीतिवर्षसाहस्त्रिकायां प्रजायां लोक उत्पन्नो न शक्यं तथागतेन सर्व्वेऽपायाः शमयितुं । ये सत्त्वा अवसक्तकुशलमूलास्ते सत्त्वाः फले स्थिताः केचित् समाधिधारणीक्षान्तिषु निषण्णाः । उतकृष्टकुशलमूलास्ते ये सत्त्वास्ते बोधौ प्रवेवर्त्याः संवृत्ताः केचिदवसक्तकुशलमूलाः । देवमनुष्यश्रियमनुभवन्ति । स्वकस्वकैः सत्त्वाः कुशलमूलैः कर्म्मभिर्भ्रमन्ति । कतमे सत्त्वा भगवता विनीताः । यदेकसत्त्वस्यापि दुःखं न प्रशान्तं । क्षेत्रभूतः केवलं भगवत अग्रेयः । नानवरूपकुशलमूलानां सत्त्वानां दुःखमोचनं करोति । उत्पादयाम्यहं बोधिचित्त बोधिसत्त्वचर्य्यां चरंश्चाहं महाज्ञानसमुच्छ्रयेण अचिन्त्येनाकारेण धर्म्ममुखप्रवेशेन सत्त्वान् विनयेयम् । बुद्धकार्य्यं च कुर्य्यां न केवलमस्मिन् क्लिष्टे बुद्धक्षेत्रे बोधाय चित्तं परिणामयेयं । यदाहं तादृशं बुद्धक्षेत्रं लभेय उत्पादयेयमहं बोधिचित्तं । तदाहं बोधिसत्त्वचर्य्यां चरिष्यामि यदाहमनुत्तरां सम्यक्सम्बोधिं च स्पृशेयं सर्व्वं च तत्र बुद्धक्षेत्रे सत्त्वानां दुःखं प्रशमयेयं ॥

अथ खलु कुलपुत्र रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धस्तादृशमृद्ध्यभिसंस्कारमभिसंस्कृतवान् यदादर्शव्यूहं नाम समाधिं समापन्नः । तथासमाहितेन भगवता आदर्शव्यूहे समाधौ तथा रूपावभासः प्रादुर्भूतः । येनावभासेन दशसु दिक्षु एकस्यां दिशि सहस्रबुद्धक्षेत्रपरमाणुरजः-समा लोकधातवः सर्व्वगुणव्यूहा दृश्यन्ते । केषुचिद्बुद्धा भगव(न्तः)तः परिनिर्वृताः । केषुचित् परिनिर्व्वाणाय संस्थिताः । यत्र च बोधिसत्त्वा महासत्त्वा बोधिवृक्षमूले निषद्य मारं पराजयन्ति । यत्र वा चिराभिसंबुद्धा धर्म्मचक्रं प्रवर्त्तयन्ति । यत्र वा चिरप्रवृत्तधर्म्मचक्रं धर्म्मं देशयन्ति । यत्र च बुद्धानां बोधिसत्त्वानां स्फुटं बुद्धक्षेत्रं । यत्र श्रावकप्रत्येकबुद्धानामुत्पादो नास्ति । यत्र च श्रावकप्रत्येकबुद्धा उत्पद्यन्ते । यत्र च शून्यं बुद्धक्षेत्रं

बुद्धेभ्यो बोधिसत्त्वेभ्यः श्रावकप्रत्येकबुद्धेभ्यः क्वचित् क्लिष्टं बुद्धक्षेत्रं पञ्चकषायं क्वचित् परिशुद्धमपगतपञ्चकषायं। क्वचिदुत्कृष्टाः सत्त्वाः। क्वचिद्धीनाः। क्वचिद्दीर्घायुष्काः। क्वचिदल्पायुष्काः। कानिचिद्बुद्धक्षेत्राण्यग्निना संवर्त्त(न्त)ते। कानिचिदुदकेन कानिचिद्वायुना क्वचिद्विवर्त्तन्ते। क्वचिद्विवृत्तास्तिष्ठन्ति। ते सर्व्वे उदारेणावभासेन स्फुटाः संदृश्यन्ते। सर्व्वावती सापर्षतो दृष्ट्वा बुद्धक्षेत्रगुणव्यूहान् समुद्ररेणुर्ब्राह्मणः पुनराजानमेतदवोचत्। पश्य महाराजैतान् बुद्धक्षेत्रगुणव्यूहान् उत्पादय महाराजानुत्तरायां सम्यक्सम्बोधौ चित्तं गृहाण महाराज बुद्धक्षेत्रं यादृशमाकाङ्क्षसि। अथारणेमी राजा येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्। केन भगवन् कर्म्मणा बोधिसत्त्वो महासत्त्वः परिशुद्धं बुद्धक्षेत्रं परिगृह्णाति। केन कर्म्मणा परिशुद्धं। उत्कृष्टाः सत्त्वाः केन कर्म्मणा प्राप्तदीर्घायुष्काः सत्त्वा विस्तरः। भगवानाह। प्रणिधानवशेन महाराज बोधिसत्त्वो महासत्त्वः परिशुद्धं बुद्धक्षेत्रं परिगृह्णाति। अपगतपञ्चकषायं प्रणिधानेनापरिशुद्धं। राजा प्राह॥ अहं भदन्त भगवन्नगरं प्रविश्यैकान्ते निषद्य प्रणिधानं चिन्तयिष्यामि। यथाहं मे बुद्धक्षेत्रमपगतपञ्चकषायं रोचते। ततेमा शुभचर्य्यां परिणामयिष्यामि।

भगवानाह। यस्येदानीं महाराज कालं मन्यसे। अथ खलु कुलपुत्र राजाऽरणेमी भगवतः पादौ शिरसा वन्दित्वा भिक्षुसंघं च त्रिष्कृत्वः प्रदक्षिणीकृत्य भगवतोऽन्तिकात् प्रक्रान्तः। नगरं प्रविश्य स्वके गृह एकाग्रः प्रतिसंलीनो निषण्णः बुद्धक्षेत्रप्रणिधानं व्यूहं चिन्तयति। अथ खलु समुद्ररेणुर्ब्राह्मणः ज्येष्ठं राजपुत्रमभिनिमिषमामन्त्रयति। उत्पादय त्वमनिमिषानुत्तरायां सम्यक्सम्बोधौ चित्तं॥ यच्च त्वया त्रिभिः पुण्यक्रिया वस्तुभिः शुभं चरता पुण्यमार्जितं तत्सर्व्वमनुत्तरायां सम्यक्सम्बोधौ परिणामय। स प्राह। अहमप्युपाध्याय स्वगृहं गत्वैकाकी रहोगतो निषद्य बुद्धक्षेत्रगुणव्यूहांश्चिन्तयिष्यामि। यदि बोधाय चित्तमुत्पत्स्यते। पुनरागम्य भगवतः सकाशं बोधिचित्तं परिणामयिष्यामि। अतः सोऽपि राजपुत्रो भगवतः पादौ शिरसाभिवन्द्य भिक्षुसंघस्य च त्रिष्कृत्वः प्रदक्षिणीकृत्वा भगवतोऽन्तिकात् प्रक्रान्तः स्वकं निवेशनं गत्वा एकाकी रहोगतो निषद्य बुद्धक्षेत्रगुणव्यूहं चिन्तयति।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणोऽग्रपुरोहितो द्वितीयं राजपुत्रं निमन्त्रयित्वोवाच। उत्पादय त्वं कुमार बोधिचित्तं विस्तरेण। येषां यावत् सर्व्वराजपुत्रसहस्रं बोधौ समादापयति चतुरशीतिः कोट्टराजसहस्राणि अन्यानि च नवतिः कोट्यः सत्त्वानां बोधौ समादापयति। तेऽपि सर्व्वे एवमाहुः। वयमपि स्वस्वगृहं गत्वैकाकिनो निषद्य बुद्धक्षेत्रगुणव्यूहं चिन्तयिष्यामः। एवमुक्त्वा सर्व्वे एव स्वगृहाणि गत्वैकाकिनो निषण्णाः सप्तवर्षाणि बुद्धक्षेत्रगुणव्यूहप्रणिधानानि चिन्तयन्ति।

अथ खलु कुलपुत्र समुद्ररेणोर्ब्राह्मणस्यैतं अपरेण समयेन चेतसः परिवितर्क उदपादि मया खल्वनुत्तरायां सम्यक्सम्बोधौ बहुप्राणिकोटिनियुतशतसहस्राणि समादापितानि। अयं च मया बुद्धो भगवान् सप्तवर्षाणि सर्व्वोपकरणैरुपनिमन्त्रितः सार्द्धमपरिमितेन भिक्षुसंघेन। यदि च ममानुत्तरायां सम्यक्सम्बोधौ आशापरिपूर्य्यते तथा चायं प्रणिधानं संपद्यते। यदहं देवासुरगन्धर्व्वयक्षराक्षसकुम्भाण्डान् तस्मिन् महायज्ञे समादापयामि।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणः पुरोहितो वैश्रवणमाकाङ्क्षते दर्शनाय ।

अथ खलु वैश्रवणो महाराजोऽनेकैर्यक्षशतसहस्रैः परिवृतः पुरस्कृतो येन समुद्ररेणुर्ब्राह्मणस्तेनोपजगामोपेत्य समुद्ररेणोर्ब्राह्मणस्याग्रतः स्थित्वैदवोचत् । किं ब्राह्मण मन्त्रादाकाङ्क्षसे । ब्राह्मणः प्राह । को भवान् । वैश्रवणः प्राह । श्रुतं त्वया ब्राह्मणोऽसि वैश्रवणो नाम यक्षाधिपतिः । सोऽहं ब्राह्मण किमाज्ञापयसि । किं करवाणि । ब्राह्मणः प्राह । शृणु यक्षाधिपतेऽहं भगवत्पूजां करिष्ये त्वमत्रोत्सुकत्वमापद्यस्व प्राह । तथास्मि यथा त्वं ब्राह्मण काङ्क्षसे । तेन हि त्वं महाराज यक्षानस्माकं वचनेनानुत्तरायां सम्यक्सम्बोधौ समादापय । एवं च पुनः समादापय । य एते यूयं यक्षा अनुत्तरायां सम्यक्सम्बोधावर्थिका गच्छत यूयं पारान् समुद्रस्य गोशीर्षमुरगसारचन्दनमानयन्तु । अपरे भगवतोऽर्थे गन्धमपरे विविधान् पुष्पान् । येनाहं दिवसे दिवसे भगवतः पूजां करिष्यामि । एवमुक्ते ब्राह्मणो वैश्रवणो महाराजस्तस्य ब्राह्मणस्य प्रतिश्रुत्य तत्रैवान्तर्हितः । मेरौमोदेभ्यो यक्षास्तेषां सन्निपात्यैतदवोचत् । यत् खलु मार्षा जानीयुः । अयं जम्बूद्वीपे समुद्ररेणुर्नाम ब्राह्मणो राज्ञोऽरणेमिनोऽग्रपुरोहितः । स रत्नगर्भं तथागतमर्हन्तं सम्यक्सम्बुद्धं सार्द्धं भिक्षुसंघेन सप्तवर्षाणि सर्व्वोपकरणैरुपस्थापयति । तद्युष्माभिस्तत्कुशलमनुमोदितव्यं । तेन च यूयं कुशलमूलेनानुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयत । तेन खलु पुनः समयेन बहुयक्षराक्षसकोटीनयुतशतसहस्राणि अञ्जलिं कृत्वोचुः यः समुद्ररेणोर्ब्राह्मणस्य पुण्याभिष्यन्दः कुशलाभिष्यन्दो रत्नगर्भं तथागतमर्हन्तं सम्यक्सम्बुद्धं सप्तवर्षाणि सर्व्वोपकरणैरुपस्थापयति सार्द्धमपरिमितेन भिक्षुसंघेन । तत्सर्व्वं वयं पुण्यस्कन्धमनुमोदामस्तेन च कुशलमूलेनानुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धेमहि । वैश्रवणो महाराजः प्राह । शृण्वन्तु भवन्तः । यः कश्चिद् युष्माकं कुशलमूलेनार्थिकः पुण्यार्थी च सप्तवर्षान् यावत् समुद्रस्य गोशीर्षोरगसारचन्दनमानयतु । येन समुद्ररेणुर्ब्राह्मणो भगवतो भिक्षुसंघस्य चाहारसत्कारं कुर्य्यात् । ततो द्विनवतियक्षसहस्राणि एककण्ठेनोदाहृतवन्तः । वयं मार्षा इमान् सप्तवर्षान् गोशीर्षमुरगचन्दनमानयिष्याम येन समुद्ररेणुर्ब्राह्मणो भगवतोऽर्थायाहारसत्कारं करिष्यति भिक्षुसंघस्य च षट्चत्वारिंशद्यक्षसहस्राणि कथयन्ति वयं गन्धमप्येष्यामः । द्वीपं वाद्य यक्षसहस्राणि कथयन्ति । वयं विचित्रान् पुष्पानानयिष्यामः । विंशयक्षसहस्राणि कथयन्ति वयं रसायनानामाहारं सहोमो भगवतोऽर्थाय भिक्षुसंघस्य यत्नपानसत्कृतं भविष्यति । तत्राद्यो यद्दोप्स्यामः सप्ततिर्यक्षसहस्राणि कथयन्ति वयं मार्षा भगवतोऽर्थायाहारं सत्कीकरिष्यामो भिक्षुसंघस्य च ।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणो विरूढकस्य महाराजस्याकाङ्क्षति दर्शनं । ततो विरूढको महाराजो येन समुद्ररेणुर्ब्राह्मणस्तेनोपजगामोपेत्य यावदनेककुम्भाण्डकोटिनियुतशतसहस्राणि अनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयन्ति । एवं विरूपाक्षो धृतराष्ट्रो बहुनागगन्धर्व्वकोटिनियुतशतसहस्राण्यनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयन्ति ।

अथ खलु द्वितीयिकायाश्चातुर्द्वीपिकाया लोकपाला बुद्धान् भावेनागताः समुद्ररेणोर्ब्राह्मणस्य सकाशात् तानपि ब्राह्मणः समादापयति । तेऽपि गत्वा स्वकं स्वकं पर्षद-

मनुत्तरायां सम्यक्सम्बोधौ समादापयन्ति । यावत्त्रिसाहस्रमहासाहस्रात् कोटिशतं
वैश्रवणानां सपर्षत्कानामनुत्तरायां सम्यक्सम्बोधौ समादापयन्ति शतं कोटीनां । कोटिशतं
विरूपाक्षाणां कोटिशतं धृतराष्ट्राणां सपार्षद्यानामनुत्तरायां सम्यक्सम्बोधौ समादापयन्ति ।
अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणस्तेतदवोचत् । यद्यहमनुत्तरायां सम्यक्सम्बोधिमभि-
सम्बुद्धेयं । आशा च समृध्येत यदि च मे प्रणिधिः समृध्येत विरूढकानां सर्वं
कारयेयं कारं । अस्मिन् महायज्ञे लक्षसत्त्वानां संप्रिभजेयं । अनुत्तरायां सम्यक्सम्बोधौ
समादापयेयं । यदेवहमनेन पुण्येनानुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येय शक्रो समायं देवा-
नामिन्द्रो दर्शनायोपसंक्रामतु । सुयामो देवपुत्रः संतुषितः सुनिर्मितो देवपुत्रः परनिर्मित-
वशवर्तीति च देवपुत्रः दर्शनायोपसंक्रामतु । सह चित्तोत्पादो देवकुलपुत्र समुद्ररेणोर्ब्राह्म-
णस्य शक्रो देवानामिन्द्रो दर्शनायोपसंक्रान्तः सुयामश्च देवपुत्रः संतुषितश्च देवपुत्रः सुनि-
र्मितश्च देवपुत्रः परनिर्मितवशवर्ती च देवपुत्रः तं ब्राह्मणं दर्शनायोपसंक्रान्ताः तां
समुद्ररेणुर्ब्राह्मणः पृच्छति के भवन्तः पञ्चदेवराजानः स्वकस्वकनामगोत्राण्यनुश्रावयन्ति ।
एवमाहुः किं भो ब्राह्मणाज्ञाकमाज्ञापयसि । कामाज्ञाकमाज्ञापयसि । कामाभि-
रस्मिन् महायज्ञे उपकरणान्युपस्थापयितव्यानि । ब्राह्मणः माह । यानि युष्माकं देवलोके
सर्वविशिष्टानि रत्नमयानि कूटागाराणि रत्नवृक्षा वा कल्पवृक्षा वा गन्धवृक्षा वा पुष्पवृक्षा
वा । फलवृक्षाश्च दिव्यानि चीवराणि दिव्यासनानि दिव्यानि शयनानि दिव्यानि रत्नभाजनानि
दिव्यालङ्कारच्छत्रध्वजपताकाभरणानि दिव्यानि च वाद्यानि तैर्वस्तुभिः सर्वं जम्बूद्वीपमल-
ङ्कुरुत भगवतोऽर्थाय भिक्षुसंघस्य च । एवमुक्तास्ते सार्थाः पञ्चदेवराजानो ब्राह्मणस्य
प्रतिश्रुत्य ब्राह्मणस्यान्तिकात् प्रक्रान्ता देवलोकं गता गत्वा चैतकं देवपुत्रं आमन्त्र्य
देवपुत्रं रोहितं देवपुत्रं कोरभनन्दं देवपुत्रं आमन्त्रयित्वैवमाह । गच्छत यूयं मार्षा
जम्बूद्वीपमवतीर्य जम्बुवनमुद्यानमेवंविधैरलङ्कारविशेषैर्दिव्यैर्विधेरामरैः संस्तीर्यालङ्कुरुत ।
यथैवायं देवलोकोऽलङ्कृत । एवमियमेव भगवतोऽर्थाय रत्नमयं कूटागारं कारयत
यादृशोऽयं स्वनिर्यूहः कूटागारं देवश्च मार्षा कूटागारं कारयत । ते पञ्चदेवपुत्रा देवराजा
प्रतिश्रुत्य जम्बूद्वीपमवतीर्य यथाज्ञप्ता सर्वं जम्बूवनमुद्यानं यथा यथोत्तमालङ्कारैरलङ्कृतवैडूर्य-
ध्वजैरलङ्कृतं स्वर्यन्त्र कूटागारो भगवतोऽर्थाय कृतस्तद्यथा शक्रस्य देवानामिन्द्रस्य स्व-
निर्यूहः कूटागारः सर्वाकारपरिनिष्ठितं कृतवन्त जाम्बूवनं दिव्यैरलङ्कारैरलङ्कृत्य देव-
राजानो संप्राप्ताराधयन्ति । यत् खलु मार्षा आनुपूर्व्येणायं देवलोकः स्वभ्यलङ्कृतः तथैव
जाम्बूवनोद्यानं दिव्यैरलङ्कारविशेषैः समलङ्कृतं सर्वाकारपरिनिष्ठितं । यश्च एष सर्वरत्न-
मयः कूटागारो भगवतोऽर्थाय कृतः तद्यथा शक्रस्य देवानामिन्द्रस्य स्वनिर्यूहः कूटागारः
मोद मार्षा देवलोकस्य जम्बूद्वीपं च जम्बूवनमुद्यानस्य किंविशेषयन्ति नानाकरणं ।
अथ ते पञ्चदेवराजानः शक्रसुयामसंतुषिताः सुनिर्मितपरनिर्मितवशवर्ती जम्बू-
द्वीपमवतीर्य समुद्ररेणुं ब्राह्मणमुपसंक्रम्यैवमाहुः । अलङ्कृतं ब्राह्मण भगवतोऽर्थाय भिक्षु-
संघस्य च जम्बूवनं किमस्माभिर्भूयः कर्तव्यं ।
एवमुक्ते समुद्ररेणुर्ब्राह्मणः पञ्चदेवपुत्रानेतदवोचत् पूर्वं खलु पञ्चदेवराजानः पृथग्देव-

निकाये राज्यं कारयत। मम युष्माकं वशो वर्त्तते गच्छत राजानः स्वकस्वकां देवपर्षदां सन्निपातयत जम्बूद्वीपे भगवन्तं दर्शनायोपसंक्रामत। वन्दनाय पर्य्युपासनाय भिक्षुसंघं च भगवतश्चान्तिकाद्धर्म्मं शृणुत।

अथ ते पञ्चदेवराजानः स्वकस्वकेषु स्थानान्तरेषु गत्वा शक्रो देवानामिन्द्रो देवांस्त्रयस्त्रिंशान् सन्निपात्यैवमाह। यत् खलु मार्षा जानीयुर्जम्बूद्वीपेऽरणेमिनो राज्ञः समुद्ररेणुर्नाम ब्राह्मणः। अग्रपुरोहितः सरत्नगर्भं तथागतं सप्तवर्षाणि सर्व्वोपकरणैरुपनिमन्त्र्य प्रतिमानयति सार्द्धमपरिमितेन भिक्षुसंघेन। अस्माभिश्च भगवतोऽर्थाय भिक्षुसंघस्य च सर्व्व आरामोऽलङ्कृतः। तद्यूयं कुशलमूलमनुमोद्यानुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयत। समुद्ररेणोर्ब्राह्मणस्य समादापनया।

तेन खलु पुनः समयेन बहवस्त्रयस्त्रिंशद्देवकोटिनियुतशतसहस्रा अञ्जलिं प्रगृह्य वाचमुदीरयन्ति। अनुमोदामो मार्षा एवं पुण्यस्कन्धं तया चानुमोदनया यत् पुण्यमस्माकं स्यात् तत्सर्व्वमनुत्तरायां सम्यक्सम्बोधौ परिणामयामः। सुयामो देवपुत्रो यामान् देवान् सन्निपात्य यावद्बहूनि देवपुत्रकोटीनियुतसहस्राण्यञ्जलिं प्रगृह्य वाचं भाषन्ते स्म। अनुमोदामो वयं मार्षा यत् कुशलमूलं तस्माच्च कुशलमूलाद् यत् पुण्यं तत् सर्व्वमनुत्तरायां सम्यक्सम्बोधौ परिणामयाम। ते मदि. मार्षा गच्छामो जम्बूद्वीपमवतीर्य्य भगवतः पादौ शिरसाभिवन्द्य भिक्षुसंघं च भगवतोऽन्तिकाद्धर्म्मं शृण्वन्ति। देवा गगनतलस्था भगवन्तं दिव्यैः कुसुमोत्पल-पद्म-कुमुद-पुण्डरीकसुमना-वार्षिकातिमुक्तक-चम्पक-मान्दारवपुष्पसङ्घाव-किरन्ति दिव्यानि च वाद्यानि प्रवादयन्ति।

पुनरपरं कुलपुत्र समुद्ररेणोर्ब्राह्मणस्य एवं चेतसि चेतः-परिवितर्क उदपादि यदि ममानुत्तरायां सम्यक्सम्बोधौ आशा परिपूर्य्यते। तदयं मम प्रणिधिः संपत्स्यते। यदिश्मनुत्तरां बोधौ समादापयेयम्। सह चित्तोत्पादेन कुलपुत्र महासुरेन्द्रो येनासौ ब्राह्मणस्तेनोपसंक्रान्ता उपसंक्रम्य यावद्बह्वसुरकोटिनियुतशतसहस्राणि ब्राह्मणस्य वचनेन सस्त्रीपुरुषदारकदारिका अनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयन्ति। भगवतश्च सकाशमुपगम्य धर्म्मं शृण्वन्ति विस्तरेण पेयालं। एवं स ब्राह्मणो मारमाकाङ्क्षते। तेन खलु पुनः समयेन पूर्णानाम मार आगम्य यावदनेकैर्मारकोटिनियुतशतसहस्रैर्मारकायिकैर्देवपुत्रैः सस्त्रीपुरुषदारकदारिकैरनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादितानि यावदुपसंक्रान्ता धर्म्मश्रवणाय॥

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणः केतपुरि नाम महाब्रह्माणमाकाङ्क्षते उपसंक्रमणाय। यावद्ब्राह्मणस्य सकाशात् प्रतिश्रुत्य ब्रह्मलोकाद् यावद्बहुब्राह्मिकोटिनियुतशतसहस्राणि अनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयन्ति। ततश्चावतरन्ति भगवन्तं दर्शनाय वन्दनाय पर्य्युपासनाय भिक्षुसंघस्य च। भगवतश्चान्तिकाद्धर्म्मश्रवणाय।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणो द्वितीयायां चातुर्द्वीपिकायां शक्रमाकाङ्क्षते सुयामं सन्तुषितं परनिर्म्मितवशवर्त्तिनं च देवपुत्रमाकाङ्क्षते दर्शनाय। तेऽपि पञ्चदेवराजानो भगवतोऽनुभावेन ब्राह्मणस्य सकाशमुपसंक्रान्तास्तान् ब्राह्मणः समनुशिष्टवान्। तेऽपि स्वकानि भवनानि गत्वा स्वकां पर्षदं ब्राह्मणहस्तेन समादापयन्ति। एवं बहुभिस्त्रयस्त्रिंश-

देवनियुतशतसहस्रैरनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादितानि। अशीतिपुरुषशतसहस्रकोटिभिर्देवैश्
च सहशक्रेण मां चातुर्द्वीपिकामागता भगवन्तं दर्शनाय वन्दनाय पर्युपासनाय भिक्षुसंघं च
भगवतश्चान्तिकाद्धर्मं श्रोतुम्।

एवं सुयामः सन्तुषितः सुनिर्मितः परनिर्मितवशवर्ती देवपुत्रः। यावत् परनिर्मितवशवर्तिकान् देवान् बोधाय समादापयित्वा बहुभिः परनिर्मितवशवर्तिदेवकोटिनियुतशतसहस्रैः। अशीतिपुरुषशतसहस्रकोटिभिरनुत्तरायां सम्यक्सम्बोधौ कृतचित्तोत्पादैश्चातुर्द्वीपिकामागता भगवन्तं दर्शनाय वन्दनाय पर्युपासनाय भगवतश्चान्तिकाद्धर्मं श्रोतुम्। एवं द्वितीयायां चातुर्द्वीपिकायामसुरेन्द्रा मारा ब्रह्माणः। एवं तृतीयायां चातुर्द्वीपिकायां चतुर्थ्यां पञ्चम्यां शक्रसुयामसन्तुषितनिर्माणपरनिर्मिता सुरेन्द्रा मारा ब्रह्माणः बुद्धानुभावेनेमां चातुर्द्वीपिकामागताः सपरिवृताः यावन्तो धर्मश्रवणाय। एवं त्रिसाहस्रमहासाहस्रा बुद्धक्षेत्रात् कोटिशतं शक्राणां कोटिशतं सुयामानां कोटिशतं सन्तुषितानां कोटिशतं निर्माणरतीनां कोटिशतं परनिर्मितवशवर्तिनां देवपुत्राणां। कोटिशतमसुरेन्द्राणां कोटिशतं माराणां कोटिशतं महाब्रह्मणां। एकैको महाब्रह्मणोऽनेकैः कोटिनियुतशतसहस्रैर्ब्रह्मकायिकानां देवानामनुत्तरायां सम्यक्सम्बोधौ कृतचित्तोत्पादानां परिवृतः बुद्धक्षेत्राद्भगवदनुभावेनेमां चातुर्द्वीपिकामागतो भगवतो दर्शनायोपसंक्रमणाय वन्दनाय पर्युपासनाय भिक्षुसंघं च भगवतश्चान्तिकाद्धर्मं श्रोतुम्। तत्र च त्रिसाहस्रमहासाहस्रायां लोकधातौ नास्ति कश्चित् पृथिवीप्रदेशो यो न स्फुटोऽभूत्।

अथ खलु कुलपुत्र समुद्ररेणोर्ब्राह्मणस्यैतदभवत्। यदि ममानुत्तरायां सम्यक्सम्बोधावाशापरिपूरिर्भवति। तद्यथैवं कोटिशतं देवपुत्राणां यावत् कोटिशतं महाब्रह्मणां मामनुवर्तन्ति तथैव च मां भगवाननुवर्तेत। यद्येवंरूपं महाप्रातिहार्यं कुर्यात् यावत् त्रिसाहस्रमहासाहस्रलोकधातौ मनुष्याः तिर्यञ्चो यामलौकिका नैरयिकास्तेषां सर्वेषां दुःखवेदना प्रशाम्येत दुःखावेदना प्रशाम्येत सुखावेदनोत्पद्येत॥ तेषां चैकैकस्याग्रतो बुद्धनिर्मितं तिष्ठेत् यस्तान् सत्त्वाननुत्तरायां सम्यक्सम्बोधौ समादापयेत्।

अथ खलु कुलपुत्र रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धः समुद्ररेणोर्ब्राह्मणस्य चेतसा चित्तमाज्ञाय तस्यां वेलायां प्रतापं नाम समाधिं समापन्नः। यथा समाहितेन चित्तेन भगवान् प्रतापे समाधौ भगवतः कायादेकैकस्माद्रोमकूपादनन्ता अमितकान्ता रश्मय उद्गता यै रश्मिभिरयं त्रिसाहस्रमहासाहस्रलोकधातुः स्फुटोऽभूत्। स तत्र केचिद्रश्मयो नरकं गत्वा शीतनरकोपपन्नसत्त्वानामुष्णा वायवो वान्ति॥ ये उष्णनरकोपपन्नाः सत्त्वा तेषां शीतला वायवो वान्ति येन तेषां नैरयिकाणां सत्त्वानां सर्वं क्षुत्पिपासादुःखं प्रशाम्यति। क्षुधावेदनापहृते। एकैकस्य च नैरयिकस्य निर्मितो बुद्धविग्रहोऽग्रतोऽभूत्॥ द्वात्रिंशद्भिर्महापुरुषलक्षणैरलङ्कृतगात्रः। अशीतिभिरनुव्यञ्जनैः समलङ्कृतशरीरः।

अथ तेषां नैरयिकाणां सुखसमर्पितानामेतदभूत्। कं प्रत्ययमस्माकं दुःखमपगतं सुखं च प्रादुर्भूतं। ते तं भगवन्तं पश्यन्ति द्वात्रिंशद्भिर्महापुरुषलक्षणैरलङ्कृतं अशीत्यनुव्यञ्जनैर्विराजितगात्रं। ते तं दृष्ट्वैवमाहुः। अस्य महाकारुणिकस्य महात्मनोऽनुभावेन

वयमेवं सुखिनः संवृत्ताः । ते प्रीतिसौमनस्यजाताः प्रसन्नमनसो भगवन्तं प्रेक्षन्ते । तेषां भगवानाह । साधु यूयं सत्त्वा नमो बुद्धायेति वाचं भाषन्तां । अनुत्तरायां च सम्यक्सम्बोधौ चित्तमुत्पादयत । एवं युष्माकं दुःखावेदना न भूय उत्पाद्यते । नित्यं च सुखाया वेदनाया लाभिनो भविष्यथ । तएवमाहुः । नमो बुद्धायोत्पादयामो वयमनुत्तरायां सम्यक्सम्बोधौ चित्तं तदास्माकं कर्म्मावरणक्षयाय संवर्त्ततु । ततश्च केचित्तत्र च्युत्वा मनुष्याणां सभागतायामुपपद्यन्ते ॥ ये नैरयिकाः सत्त्वा अग्निना दह्यन्ते तेषां ते रश्मयः । शीतलं वायुमुत्सृजन्ति* ते तैः स्पृष्टाः प्रशान्तदुःखवेदनाः सुखिनो भवन्ति । यावत् केचित्ततश्चाविल्या मनुष्याणां सभागतायामुपपद्यन्ते । एवं तिर्य्यग्योनिर्वक्तव्या एवं यावन्मनुष्या वक्तव्याः । सा च प्रभा प्रतिनिवृत्य भगवन्तं त्रिःकृत्वः प्रदक्षिणीकृत्य भगवतोऽन्तिके तस्थिं सा दृष्ट्वा च गगनातिक्रान्ता देवमनुष्याः यक्ष-राक्षसनागासुरा अवैवर्त्तिकाः स्थापिताः । अनुत्तरायां सम्यक्सम्बोधौ गगनातिक्रान्ताश्च सत्त्वाः समाधिक्षान्तिधारणीप्रतिलब्धवन्तः । येर्जम्बूद्वीपकैर्मनुष्यैः श्रुतं मधुरे नगरे राजधान्यां जम्बूवनोद्यानं भगवतोऽर्थाय भिक्षुसंघस्य च देवैर्दिव्यैरलङ्कारविभूषणैरलङ्कृतं । यत्तु वयं गत्वा पश्यामः । तत्र च रत्नगर्भं तथागतं पश्येम भिक्षुसंघं च । तत्र गत्वा भगवतः सकाशाद्धर्म्मं शृणुयामः । तेन खलु पुनः समयेन दिवसे दिवसेऽनेकानि देवमनुष्येभ्यः स्त्रीपुरुषदारकदारिकाकोटिनियुतशतसहस्राणि मधुरकं नगरमागच्छन्ति ॥ भगवतो दर्शनायापसंक्रमणाय पर्य्युपासनाय भिक्षुसंघं च । [illegible] चोद्यानं दिवृत्तः । तस्य चोद्यानस्य विंशद्वारसहस्राणि सप्तरत्नमयान्यभूवन् । एकैकस्मिन्नुद्यानद्वारे पञ्चपञ्चशतानि रत्नपीठानां प्रज्ञप्तानि । तेषु च पञ्चपञ्चमाणवकशतान्युपविष्टानि-य ते सत्त्वा गत्वास्तमुद्यानं प्रविशन्ति तांस्ते माणवका बुद्धशरणं गमयन्ति धर्म्मशरणं गमयन्ति संघशरणं गमयन्ति । अनुत्तरायां सम्यक्सम्बोधौ समादापयन्ति चित्तं चोत्पादयन्ति । आसनस्था ये दूरस्थायिनः पश्चात्तमुद्यानं प्रविशन्ति भगवन्तं दर्शनाय वन्दनाय पर्य्युपासनाय भिक्षुसंघस्य च दर्शनाय । एवं समुद्ररेणुना ब्राह्मणेनाग्रपुरोहितेन तानि सप्तवर्षाणि गगनातिक्रान्ता देवा अनुत्तरायां सम्यक्सम्बोधौ समादापिता विनीता निवेशिताः प्रतिष्ठापिताः । गगनातिक्रान्ताः नागा असुरा यक्षराक्षसाः कुम्भाण्डाः गन्धर्व्वाः प्रेताः पिशाचा नैरयिका गगनातिक्रान्ताः । अनुत्तरायां सम्यक्सम्बोधौ समादापिता विनीता निवेशिताः प्रतिष्ठापिताः । यावत्तिर्य्यग्योनिगता इति ।

स तेषां सप्तानां वर्षाणामत्ययेन समुद्ररेणुर्ब्राह्मणश्चतुरशीतिस्वर्णसहस्राणि स्थापयित्वा दिव्यं चक्ररत्नं चतुरशीतिर्हस्तिसहस्राणि सप्तरत्नालङ्कारविभूषितानि हस्तिरत्नं यावच्चतुरशीतिः रथसहस्राणि निर्यातयति तेषां सप्तानां वर्षाणामत्ययेन राज्ञोऽरणेमिनः । न रागच्छन्द उत्पद्यन्ते न द्वेषच्छन्दः न मोहच्छन्दः । न राजच्छन्दः न धनच्छन्दः । न पुत्रच्छन्दः न देवीच्छन्दः नाहारच्छन्दः । न दानच्छन्दः । न वस्त्रच्छन्दः न गन्धच्छन्दः । न यानच्छन्दः । न निद्राच्छन्दः । नात्मच्छन्दः न परच्छन्दं कृतवान् । सप्तवर्षाणि न पार्श्वं निक्षिप्तवान् न चास्य रात्रिसंज्ञा उत्पन्ना न दिवससंज्ञा उत्पन्ना । न शब्दसंज्ञां रससंज्ञां न गन्धसंज्ञां न स्पर्शसंज्ञामुत्पादितवान् । तैश्च सप्तभिर्वर्षैः कायश्च मोनोत्पन्नः नित्यं सततसमितं दशसु दिक्षु एकैकस्यां दिशि सहस्रं बुद्धक्षेत्रपरमाणुरजःसमेषु लोकधातुषु बुद्धक्षेत्रगुणव्यूहं पश्यति ।

---

* अत्र पाठः सन्दिग्धः ।




अथ खलु राजारणेमी रथाभिरूढः तेन पुत्रसहस्रेण चतुरशीतिभिश्च कोट्टराजसहस्रैर्दुर्निवर्तिभिश्च प्राणिकोटिभिः परिवृतो नगरान्निर्याति । भगवतोऽन्तिकं भगवन्तं दर्शनाय वन्दनाय पर्य्युपासनाय च यावद्यानस्य भूमिस्तावद् यानेन यात्वा यानादवतरति पादैरेव सौर्य्यं पद्मरामेव जम्बूवनं प्रविवेश । प्रविश्य च येन भगवांस्तेनोपजगाम उपेत्य भगवतः उपस्थानं कृतं सर्व्वोपकरणैः । अपरिमितस्य भिक्षुसंघस्य च नानाविचित्राणि च रत्नानि निर्यातितानि । चतुरशीतिश्च नगरसहस्राणि तदेवानुमोदना-सहगतं पुण्यस्कन्धं यच्च परित्यागसहगतं पुण्यस्कन्धं सर्व्वं परिणामयानुत्तरायां सम्यक्सम्बोधौ ॥ एवं सद्राज्ञः पुत्रसहस्रं समादापयति तथैव चतुरशीतिः कोट्टराजसहस्राणि । अपराश्च बहुप्राणकोट्यः । ते तानुमोदना-सहगतेन पुण्यस्कन्धेनानुत्तरायां सम्यक्सम्बोधौ समादापिताः प्रतिष्ठापिताः । एवमाह अनुमोदत पूर्यमिह दक्षिणां निर्यातयत कथयति च ।

दानेनाहमनेन नेन्द्रभवनं न ब्रह्मलोके फलं,
काङ्क्षामि द्रुतवायुवेगचपलां नलेव राज्यश्रियं ।
दानस्यास्य फलं तु भक्तिमहतो यत्ने इते नाप्नुयां,
चित्तैश्वर्य्यकरं* हि बोधिमतुलां सत्त्वांश्च सन्तारये ॥

इति करुणापुण्डरीके दानविसर्गस्तृतीयः ॥

---

अथ खलु कुलपुत्र रत्नगर्भस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्यैतदभवत् । राज्ञोऽनेन समुद्ररेणुना ब्राह्मणेन प्राणकोट्योऽनुत्तरायां सम्यक्सम्बोधौ समादापिता निवेशिताः प्रतिष्ठापिता अवैवर्त्तिकभूमौ स्थापितास्ते च मया व्याकर्त्तव्या बुद्धक्षेत्राश्च दर्शयितव्याः ।

अथ खलु भगवान् बोधिचित्तासंप्रमोषनाम-समाधिं समापन्नः स्मितं च प्राविष्कृतवान् । येन स्मितविष्करणेनानन्ता पर्य्यन्ता बुद्धक्षेत्रा उदारेणावभासेनावभास्य गङ्गोऽसंख्येमिनोऽन्येषां च बहूनां प्राणकोटीनां बुद्धक्षेत्रगुणव्यूहमादर्शयति । तेन खलु पुनः समयेन दशसु दिक्षु गणनातिक्रान्तेषु बुद्धक्षेत्रेषु बोधिसत्त्वा महासत्त्वाः । तमवभासं दृष्ट्वा बुद्धानुभावेनेमां लोकधातुं समागता भगवतो दर्शनाय वन्दनाय पर्य्युपासनाय भिक्षुसंघं च तेन विविधैर्बोधिसत्त्वविकुर्व्वितैर्भगवतः पूजां कृत्वा पादौ शिरसाभिवन्द्य भगवन्तं पर्य्युपास्य पुरतो निषण्णा बोधिसत्त्वप्रणिधानं श्रोतुकामाः ।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणोऽग्रपुरोहितः राजानमरणेमिनमाह । त्वं तावन्महाराज प्रथमं बुद्धक्षेत्रगुणव्यूहं प्रतिगृह्णीष्व । अथ राजाऽरणेमी येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् । अहं भगवन् बोध्यर्थिकः यन्मया त्रैमास्यं भगवतो नानाविधैरुपकरणैरुपस्थानं कृतं अप्रमेयस्य च भिक्षुसंघस्य तन्मया कुशलमूलमनुत्तरायां सम्यक्-

---

* चित्तैश्वर्य्यकरीमिति पाठः साधुतरः ।

सम्बोधौ परिणामितं । इमानि च भगवन् मया मम प्रणिधानि बुद्धक्षेत्रगुणव्यूहाभिलषिता यत्राहं भगवन् बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धो यत्र न निरया न तिर्यग्-योनिर्न यमलोकाः ये च सत्त्वाः कुशलैर्युक्ते मा दुर्गतावुपपद्येयुः । सर्वे तत्र सत्त्वाः सुवर्णवर्णा भवेयुः सर्वेषां तत्र देवमनुष्याणां नानात्वं न स्यात् सर्वे तत्र सत्त्वाः जातिस्मराः । सर्वे सत्त्वाश्चैवंरूपेण दिव्येन चक्षुषा समन्वागताः यद्दशबुद्धकोटिनियुतशतसहस्राणि अन्येषु लोकधातुषु तिष्ठन्तो यापयन्तो धर्मं च देशयन्तः पश्येयुः सर्वसत्त्वाश्चैवंरूपेण दिव्येन श्रोत्रेण समन्वागताः स्युः । यद्बुद्धकोटीनियुतशतसहस्राणां धर्मं देश्यमानं शृणुयुः । सर्वे सत्त्वाश्चैवंरूपेण परचित्तज्ञानेन समन्वागताः स्युः । तेषां च बुद्धकोटिनियुतशतसहस्र-स्थितानां सत्त्वानां चित्तचरितान्याजानीयुः सर्वसत्त्वाः तथाविधेनर्द्धिकौशल्येन समन्वागताः यदुतैकचित्तोत्पादेन बुद्धकोटिनियुतशतसहस्राणि व्यतिक्रमेयुः । मा च तत्र सत्त्वा भवेयुः । परिग्रहसंज्ञोऽन्ततः स्वशरीरेऽप्यनाग्रहीतमानसाः । सर्वसत्त्वाश्चावैवर्तिका भवेयु-रनुत्तरायां सम्यक्सम्बोधौ । सर्वसत्त्वाश्चौपपादुका स्युः । न तत्र मातृग्रामस्य प्रज्ञप्तिर्भवेत् न तत्र सत्त्वानामायुः । प्रमाणपर्यन्तः स्यादन्यत्र प्रणिधानवशेन । न तत्र सत्त्वानामकुशलस्य नामापि स्यात् । न तत्र बुद्धक्षेत्रे दुर्गन्धं स्यात् दिव्यातिक्रान्तेन भगवन् गन्धेन बुद्धक्षेत्रं स्फुटं स्यात् सर्वसत्त्वाश्च द्वात्रिंशद्भिर्महापुरुषलक्षणैः समलङ्कृताः स्युः । सर्वसत्त्वाश्चैकजाति-प्रतिबद्धाः स्युः । स्थापयित्वा प्रणिधानं । सर्वसत्त्वाश्चैकपूर्व्वाह्णेन बुद्धानुभावेन गगनाति-क्रान्तान् बुद्धान् पर्युपासीरन् । यावदृद्धिविधेन बोधिसत्त्वविकुर्व्वितेनाकाङ्क्षेयुः बुद्धानां पूजां कर्त्तुं तथैव तेषां सिद्ध्येयुः । तेनैव पूर्व्वभक्तेन निवर्त्तेयुः सर्वसत्त्वाश्च बुद्धपिटकं कथयेयुः । सर्वसत्त्वाश्च नारायणबलैः समन्वागता भवेयुः । न कश्चित् सत्त्वो बुद्धक्षेत्रगुणालङ्कारस्य वर्णपर्यन्तं शक्तः स्याद्ग्रहीतुमन्तशो दिव्येनापि चक्षुषा । सर्वसत्त्वाश्च प्रतिसम्विद्-प्राप्ताः स्युः । असंख्येयप्रतिभानाः । एकैकस्य च बोधिसत्त्वस्य योजनसहस्रप्रमाणं स्यात् प्रभास्वरं च तद्बुद्धक्षेत्रं स्यात् । सर्वं तेन च गगनातिक्रान्ता बुद्धक्षेत्रगुणव्यूहास्तत्र स्फुरेयुः * । ये चात्र सत्त्वा उपपद्येयुर्यावद्बोधिपर्यन्तेन ब्रह्मचारिणः स्युः सर्वसत्त्वाः सदेवकस्य लोकस्य नमस्यनीयाः स्युः । यावद्बोधिपर्यन्तेन । नेन्द्रियविकला भवेयुः । सहोप-पन्नाश्च तत्र सत्त्वा दिव्यातिक्रान्तं आर्य्यप्रीतिसुखं प्रतिलभेयुः । सर्वसत्त्वाश्च तत्र कुशलमूले समवधानाः स्युः । सर्वसत्त्वाश्च तत्र नवानि वस्त्राणि काषायाणि धारयेयुः । सहोपपन्नाश्च तत्र सत्त्वाः सुविभक्तिवतीं समाधिं प्रतिलभेयुः । यस्य समाधेः प्रतिलाभाद्गगनातिक्रान्तेषु बुद्धक्षेत्रेषु सत्त्वा बुद्धान् पर्युपासीरन् यावद्बोधिपर्यन्तं नानुपश्येयुः । ये च तत्र बोधिसत्त्वा उपपद्येयुः । ते यादृग्जातीयान् बुद्धक्षेत्रगुणव्यूहान् आकाङ्क्षेयुः । तादृग्जातीयान् बुद्ध-क्षेत्रगुणव्यूहान् तेषु रत्नवृक्षेषु पश्येयुः सहोपपन्नाश्च सत्त्वाः समाधिं प्रतिलभेयुर्यस्य समाधेः प्रतिलाभात् । दशसु दिक्षु गगनातिक्रान्तेषु अन्येषु बुद्धक्षेत्रेषु बुद्धांस्तिष्ठन्तो यापयन्तो नित्यं पश्येयुर्यं तत्र सत्त्वा प्रत्याजायेयुः । ते सर्वे एवंरूपेण चीवरविमानालङ्काराभरणवर्णरूपेण

---

* पश्येयुरिति साधु ।

यथा परनिर्म्मितवशवर्त्तिनो देवाः। न तत्र बुद्धक्षेत्रे पांशुशिला कालपर्व्वता भवेयुः। न चक्रवाडमहाचक्रवाडा न सुमेरुर्महासमुद्राः॥ न तत्रावरणनिवरणक्लेशशब्दाः। सर्व्वेण सर्व्वं सर्व्वतश्च तत्र नरकतिर्य्यग्यमलोकशब्दो न स्यादक्षणशब्दो न दुःखशब्दः। एवंरूपेणाहं भगवन् बुद्धक्षेत्रेणार्थी। तावदहं भदन्त भगवन् बोधिसत्त्वदुष्करचर्य्यां चरिष्ये यावन्नैवंरूपैर्गुणैर्बुद्धक्षेत्रं परिशोधयिष्ये। एवमहं भदन्त भगवन् पुरुषकारं करिष्ये। ततः पश्चादनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्ये। दशयोजनसहस्राणि मे बोधिवृक्षो भवेत् तत्र निषण्णश्चाहमेकासनपर्य्यङ्केनोत्पादेनानुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धेयं। अप्रमाणं च मे प्रभा स्यात् बुद्धक्षेत्रकोटीनियुतशतसहस्राण्यवभासयन्ती। अपरिमाणं च ममायुर्भवेदप्रमेय-कल्पकोटीनियुतशतसहस्राणि न शक्यं केनचित् गणयितुं अन्यत्र सार्व्वज्ञेन ज्ञानेन। अप्रमेयश्च मे बोधिसत्त्वसंघः स्यात् श्रावकप्रत्येकबुद्धवर्जितो यन्न शक्यं गणयितुं। अन्यत्र सार्व्वज्ञेन ज्ञानेन बोधिप्राप्तस्य च ममाप्रमेयेष्वसंख्येयेष्वन्येषु बुद्धक्षेत्रेषु बुद्धा भगवन्तो वर्णभाषणं कुर्य्युर्घोषं चानुश्रावयेयुर्यशश्चोदीरयेयुः। बोधिप्राप्तस्य ममाप्रमेयेष्वसंख्येयेष्वन्येषु बुद्धक्षेत्रेषु ये सत्त्वा नामधेयं शृणुयुस्ते सर्व्वे बुद्धक्षेत्रकुशलमूलपरिणामनं कृत्वा मम बुद्धक्षेत्रे उप-पद्येयुः। स्थापयित्वानन्तर्य्यकारकान् सत्त्वान् सद्धर्म्मप्रतिक्षेपकान्। बोधिप्राप्तस्य मे अन्यासु गणनातिक्रान्तासु लोकधातुषु सत्त्वा बोधिचित्तोत्पादं कुर्य्युः। मम बुद्धक्षेत्रे उपपत्ति-माकाङ्क्षमाणाः। तत्र च कुशलमूलपरिणामनं कुर्य्युः। तेषां चाहं मरणकालसमयेष्वप्रतक्ष्ठेय बोधिसत्त्वगणपरिवृतः। ते च मां दृष्ट्वा प्रीतिं प्रसादं च ममान्तिके उत्पादयेयुः। सर्व्वावरणानि च निवर्त्तयेयुः। कालं च कृत्वास्माकं बुद्धक्षेत्रे उपपद्येयुः। ये च तत्र बोधिसत्त्वास्तेऽस्माकं सकाशादश्रुतपूर्व्वां धर्म्मदेशनामाकाङ्क्षेयुः श्रोतुं। ते यादृशीमाकाङ्क्षेयुस्तादृशीं शृणुयुः। बोधिप्राप्तस्य च मम गणनातिक्रान्तेषु बुद्धक्षेत्रेषु बोधिसत्त्वनामधेयं शृणुयः। तेऽवैवर्त्तिकाः स्युरनुत्तरायां सम्यक्सम्बोधौ प्रथमां क्षान्तिं प्रतिलभेयुः। तथा द्वितीयां यादृशीं समाधि-धारणीं वाकाङ्क्षेयुः। तादृशीं समाधि-धारणीं च प्रतिलभेयुः। परिनिर्वृतस्य च मम गणनातिक्रान्तेषु कल्पेषु पश्चाद्गणनातिक्रान्तेषु बुद्धक्षेत्रेषु बोधिसत्त्वा मम नामधेयं श्रुत्वा परमां प्रीतिं प्रसादं प्रामोद्यं च प्राप्नुयुर्नमस्यमाना आश्चर्य्यप्राप्ता यशःकीर्त्तिं च वर्णयेयुः बोधिसत्त्वभूतेन च यदा मया बुद्धकार्य्यमभिनिष्पादितं ततः पश्चादनुत्तरां सम्यक्सम्बोधि-मभिसम्बुध्येयं। अभिसम्बुद्धस्य मम परमप्रसादप्रतिलब्धा बोधिसत्त्वाः प्रथमायाः क्षान्त्या श्री(ला)भिनः स्युर्द्वितीयायाः तृतीयायाः यादृशीं च समाधिं धारणीमाकाङ्क्षेयुस्तादृशीं प्रतिलभेयुः। यावद्बोधिपर्य्यन्तेनानुपयेयुः। बोधिप्राप्तस्य च मे गणनाक्रान्तेषु बुद्धक्षेत्रेषु या स्त्रियो मम नामधेयं शृणुयुस्ताः परमप्रीतिप्रामोद्यं प्रतिलभेयुः। अनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयेयुः। यावद्बोधिपर्य्यन्तेन न भूयः स्त्रीत्वं प्रतिलभेयुः। परिनिर्वृतस्य च मे गणनातिक्रान्तेषु कल्पेषु गणनातिक्रान्ता याः स्त्रियो मम नामधेयं शृणुयुः। परमप्रीतिप्रामोद्यं प्रसादं च प्राप्नुयुः। अनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयेयुः। यावद्बोधिपर्य्यन्तेन न भूयः स्त्रीत्वं प्रतिलभेयुः। ईदृशमहं भदन्त भगवन् बुद्धक्षेत्रमाकाङ्क्षामि ईदृशाश्च परि-शुद्धाशयाः सत्त्वा ईदृशोऽहं भगवन् बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं॥

अथ खलु कुलपुत्र रत्नगर्भस्तथागतोऽर्हन् सम्यक्संबुद्धो राज्ञोऽरणेमिनः साधुकारमदात्। साधु साधु महाराज गम्भीरस्ते महाराज प्रणिधानं परिशुद्धं ते बुद्धक्षेत्रं परिगृहीतं। पश्य महाराज पश्चिमायां दिशि कोटिशतसहस्रबुद्धक्षेत्राण्यतिक्रम्य इन्द्रसुविराजितानाम लोकधातुः। तत्रेन्द्रघोषेश्वरराजो नाम तथागतोऽर्हन् सम्यक्संबुद्धस्तिष्ठति ध्रियते यापयति परिशुद्धानां सत्त्वानां धर्मं देशयति। न च तत्र बुद्धक्षेत्रे श्रावकप्रत्येकबुद्धानां प्रज्ञप्तिरप्यस्ति। अपरान्त न तत्र श्रावकप्रत्येकबुद्धकथा क्रियते। शुद्धा च तत्र महायानकथा सर्व्वे च औपपादुकाः सत्त्वा न च तत्र मातृग्रामस्य नामापि ज्ञायते। सर्व्वे ते गुणास्तत्र बुद्धक्षेत्रे यथा महाराजेन परिमितं बुद्धक्षेत्रगुणव्यूहप्रणिधानं कृतं। अभिज्ञाशयाः सत्त्वा वैनेयाः परिगृहीतास्तेन त्वं महाराज ! इन्द्रघोषस्य तथागतस्य परिनिर्वृतस्य तस्मिन् सद्धर्मेऽन्तर्हिते षष्ठीनामन्तरकल्पानामत्ययेन सा लोकधातुर्मेरुप्रभा नाम भविष्यति तत्राचिन्त्यमतिगुणराजो नाम भविष्यत्यर्हन् सम्यक्संबुद्धो यथैवेन्द्रघोषेश्वरराजस्य तथागतस्यार्हतः सम्यक्संबुद्धस्य इन्द्रसुविराजितायां लोकधातौ बुद्धक्षेत्रगुणव्यूहः तथैवाचिन्त्यमतिगुणराजस्य तथागतस्य मेरुप्रभायां लोकधातौ गुणव्यूहो भविष्यति। तस्य चाचिन्त्यमतिगुणराजस्य तथागतस्य षट्पष्टान्तरकल्पान्यायुःप्रमाणं भविष्यति। यदाचिन्त्यमतिगुणराजस्तथागतः परिनिर्वास्यति तस्य षोडशान्तरकल्पाः सद्धर्मः स्थास्यति तस्य सद्धर्मेऽन्तर्हिते सहस्रान्तरकल्पात्ययेन विरतिर्नाम लोकधातुर्भविष्यति। तत्र रश्मिनाम तथागतोऽर्हन् सम्यक्संबुद्धः पेयालं पूर्व्ववत् महा*घोषामायुः समालोकधातुः। एवं परिनिर्वृतानां सद्धर्मेऽन्तर्हिते अपरानाम सा लोकधातुर्भविष्यति तत्र रत्नेश्वरघोषो नाम तथागतोऽर्हन् सम्यक्संबुद्ध उत्पत्स्यते। समो बुद्धक्षेत्रगुणव्यूहः षष्टं चान्तरकल्पा स्थास्यति यापयिष्यति धर्मं च देशयिष्यति। तस्य परिनिर्वृतस्य सप्तान्तरकल्पां सद्धर्मः स्थास्यति तस्मिंश्च सद्धर्मे एतर्हि ते पेयालं पूर्व्ववत् एवं चाप्रमेयापरिमाणं तथागतांस्तत्र बुद्धक्षेत्र उपपन्नान् पश्यामि। परिनिर्वृतोऽपि मेरावो लोकधातुस्संवर्त्तते न निवर्त्तते। तत्रानागतेऽध्वनि अतिक्रान्त एकस्मिन् गङ्गानदीवालिकासमेऽसंख्येये प्रविष्टे द्वितीये नदीगङ्गावालिकासमे संख्येये सा लोकधातुः सुखावती नाम भविष्यति। तत्र ते महाराजानुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते। अमितायुर्नाम तथागतोऽर्हन् सम्यक्संबुद्धो भविष्यसि।

राजाऽरणेम्याह। कुत्र ते भदन्त बोधिसत्त्वा महासत्त्वा येऽस्मात्कं प्रथमतरं तत्र बुद्धक्षेत्रेऽनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यते।

भगवानाह। इमे ते महाराज बोधिसत्त्वा महासत्त्वा येऽप्रमेयैरसंख्येयैरतुल्यैरपरिमाणैर्दशभ्यो दिग्भ्यः तास्वस्तास्वो लोकधातुभ्य आगतानां वन्दनाय पर्य्युपासनाय धर्मश्रवणाय। ये मम पुरतो निषण्णा एते ते तैर्बुद्धैर्व्याकृता अनुत्तरायां सम्यक्संबोधौ प्रत्युत्पन्नैरपि बुद्धैर्भगवद्भिरेते कुलपुत्र व्याकृता अनुत्तरायां सम्यक्संबोधौ ये तत्र बुद्धक्षेत्रे प्रथमतरमनुत्तरां सम्यक्संबोधिमभिसंभोत्स्यन्ते। एकैकस्मिंश्च महाराज बोधिसत्त्वोऽमेयानां बुद्धकोटिनियुतशतसहस्राणामन्तिके कृताधिकारोऽवरुप्तकुशलमूलो भावितप्रज्ञः। त एते महाराज कुलपुत्र ये तत्र प्रथमतरबुद्धक्षेत्रे बुद्धा भविष्यन्ति।

---

* अत्र पाठ श्चिन्न ।

राजारणेम्याह । अयं भदन्त भगवन् समुद्ररेणुर्ब्राह्मणो येनाहं समादापितोऽनुत्तरायां सम्यक्सम्बोधौ समादापितः स कियता कालेनानुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते । भगवानाह । महाकारुणिक एष ब्राह्मणः समुद्ररेणुः श्रोष्यसि त्वं यथैष सिंहनादं नदिष्यति ।

राजा आह । यद्येष मे प्रणिधिः समृध्यति यथाहं भगवता व्याकृतः । तद्यथाहं भगवतः पादवन्दनं कुर्य्याम् पञ्चमण्डलेन । तदा गङ्गानदीवालिकासमा लोकधातवः प्रकम्पन्तु प्रचलन्तु ये च तेषु बुद्धक्षेत्रेषु बुद्धाः तिष्ठन्ति यापयन्ति । ते च मां व्याकुर्य्युः ॥

अथ खलु कुलपुत्र राजारणेमी रत्नगर्भस्य तथागतस्य पञ्चमण्डलकेन पादयोर्निपतितः । यदैव राज्ञः शिरसा पृथिवीं स्पृष्टा तदा गङ्गानदीवालिकासमा बुद्धक्षेत्राः कम्पिताः चलिताः प्रचलिताः क्षुभिताः संप्रक्षुभिताः । गङ्गानदीवालिकासमा बुद्धा व्याकुर्व्वन्ति । संतीर्ये बुद्धक्षेत्रे धारणे कल्पेऽशीतिवर्षसहस्रायुष्कायां प्रजायां रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धो राजानमरणेमिनं व्याकरोति । भविष्यसि त्वमनागतेऽध्वनि अतिक्रान्ते गङ्गानदीवालिकोपमेऽसंख्येये प्रविष्टे द्वितीये संख्येये सुखावत्यां लोकधातावमितशुद्धायां अमितायुर्नाम तथागतोऽर्हन् सम्यक्सम्बुद्धः सनन्तता दशसु दिक्षु गङ्गानदीवालिकासमान् लोकधातूनवभासयिष्यसि । भगवानुवाच ।

उत्तिष्ठ प्रवरसत्त्व विधिज्ञ
व्याकृतस्त्वं दशबलैः ।
गङ्गासङ्ख्याविलितवसुमती
सर्गेशा भविष्यसि नरवरदम्यसारथिः ॥

अथ खलु कुलपुत्र राजारणेमी तुष्ट उदग्रः प्रमुदितः प्रीतिसौमनस्यजातः अतिक्रम्य नातिदूरे एकान्ते निषण्णो धर्मश्रवणाय । अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणो राज्ञोऽरणेमिनो ज्येष्ठपुत्रमनिमिषं नाम राजकुमारमामन्त्रयति स्म । अनिमिषोऽवोचत । पेयालं पूर्व्ववत् अवलोकिता मयाऽपाया ये च तत्र सत्त्वा उपपन्नाः प्रचण्डं घोरं दुःखमनुभवन्ति । अवलोकिता मया स्वर्गा ये च तत्र सत्त्वा उपपन्नाः । संक्लिष्टचित्ताः पुनरप्यपायेषु प्रपतन्ति सर्व्वसत्त्वाश्च मया अवलोकिता अकल्याणमित्रसंसृष्टा विहरन्ति । धर्म्मदुर्भिक्षान्धकारे कुशलमूलपरिक्षीणा दृष्टिप्राग्भाराः कुमार्गाधिरूढाः करेयाहं भगवन् तान् सत्त्वान् विज्ञापयामि । सर्व्वं च कुशलं परिणामयामि । अनुत्तरायां सम्यक्सम्बोधौ यदहं बोधिसत्त्वचर्य्यां चरेयं ये केचन सत्त्वा दुःखोत्पीडाः भयतर्जिता धर्म्मदुर्भिक्षान्धकारे पतिता लीना दीना अत्राणा अशरणा अपरायणा मामनुस्मरेयुः नाम च परिकीर्त्तयेयुः । यद्यहं दिव्येन श्रोत्रेण शृणुयां दिव्येन चक्षुषा पश्येयं न च तान् सत्त्वान् दुःखेभ्यः । परिमोचयेयम् । नाहमनुत्तरां सम्यक्सम्बोधिमभिसंबुध्येयं । यदहं भदन्त भगवन् सत्त्वहितोद्धिरप्रणिधानविशेषेण चिरं बोधिसत्त्वचर्य्यां चरिष्यामि तदा मे आशापरिपूरिर्भवतु । यदाहं भदन्त भगवन् महाराजा अरणेमी अतिक्रान्ते एकस्मिन् गङ्गानदीवालिकासमेऽसंख्येये प्रविष्टे द्वितीये सुखावत्यां लोकधातावनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यते । अमितायुर्नाम भविष्यति तथागतोऽर्हन् सम्यक्सम्बुद्धः परिशुद्धे

बुद्धक्षेत्रे परिशुद्धानां सत्त्वानां बुद्धकार्य्यं करिष्यति । यावदमितायुस्तथागतः । अपरिमाणान् कल्पान् बुद्धकार्य्यं कृत्वा परिनिर्वृतबुद्धकार्य्योऽनुपधिशेषे निर्व्वाणधातौ प्रव्रज्यते तस्य प्रविष्टस्य यावत् सद्धर्म्मः स्थास्यति तावच्चिरमहं बोधिसत्त्वचर्य्यां चरिष्यामि बोधिसत्त्वभूतोऽहं बुद्धकार्य्यं करिष्यामि । यदाऽमितायुषस्तथागतस्य सम्यक्सम्बुद्धस्य रात्र्याः प्रथमे यामे सद्धर्म्मोऽन्तर्द्धास्यति । तस्यामेव रात्र्यां पश्चिमे यामेऽहमनुत्तरां सम्यक्संबोधिमभिसंबुध्येयं । व्याकरोतु मां भगवान् अनुत्तरायां सम्यक्सम्बोधौ एवमेवाहं दशसु दिक्षु गङ्गानदीवालिकासमासु लोकधातुषु ये बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ति यापयन्ति । तानपि बुद्धान् भगवतः स्वरेण विज्ञापयामि व्याकुर्व्वन्तु मां बुद्धा भगवन्तोऽनुत्तरायां सम्यक्सम्बोधौ । व्याकृतः कुलपुत्र रत्नगर्भेण तथागतेनानिमिषो राजपुत्रः । एवमाह । पश्यसि कुलपुत्रावलोकिता अपायाः । अवलोकिताः त्वया अवलोकितं सर्व्वसत्त्वानां दुःखं संजनितं कारुण्यचित्तं सत्त्वानां दुःखमोचनार्थं क्लेशप्रहाणार्थं । तस्मात्त्वं कुलपुत्रावलोकितेश्वरो नाम भविष्यसि त्वमवलोकितेश्वर बहूनां सत्त्वकोटीनयुतशतसहस्राणां दुःखमोचकः बोधिसत्त्वभूतस्त्वं कुलपुत्र बुद्धकार्य्यं करिष्यसि । परिनिर्वृतेऽमितायुषि तथागतेऽतिक्रान्ते द्वितीये गङ्गानदीवालिकासमे संख्येये । यस्यामेव रात्र्यां प्रथमे यामे सद्धर्म्मोऽन्तर्धास्यति तस्यामेव रात्र्यां पश्चिमे यामे त्वं कुलपुत्रानेकव्यूहे बोधिवृक्षमूले वज्रासने निषण्णः । अनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे । समन्तरश्म्यभ्युद्गतश्रीकूटराजो नाम भविष्यसि तथागतोऽर्हन् सम्यक्सम्बुद्धः । षण्णवति कल्पकोटिनियुतशतसहस्राणि तवायुर्भविष्यति । परिनिर्वृतस्य ते त्रिषष्टिकल्पकोट्यः सद्धर्म्मः स्थास्यति । अवलोकितेश्वर आह । यदि भगवन्निमाया परिपूर्य्यते तदु यथाहं भगवतः पादाभिवन्दनं करोमि तदा ये बुद्धा भगवन्तो दशसु दिक्षु गङ्गानदीवालिकासमेषु लोकधातुषु तिष्ठन्ति ध्रियन्ते यापयन्ति ते व्याकुर्व्वन्तु मां चलतु च धरणी सर्व्वगङ्गानदीवालिकासमासु दशसु दिक्षु लोकधातुषु सर्व्वपर्व्वतपाषाणशिखरेभ्यः पञ्चाङ्गिकानां तूर्य्याणां शब्दं निश्चरतु । सर्व्वसत्त्वाश्च विरागचित्तं प्रतिलभन्तु । यदा चावलोकितेश्वरेण बोधिसत्त्वेन रत्नगर्भस्तथागतः पञ्चमण्डलकेन वन्दितस्तदा गङ्गानदीवालिकासमेषु बुद्धक्षेत्रेषु धरणी प्रचलिता । ते च बुद्धा भगवन्तो व्याकुर्व्वन्ति पेयालं पूर्व्ववत् सर्व्वपर्व्वतपाषाणशिखरेभ्यः पञ्चाङ्गिकस्य तूर्यस्य शब्दो निश्चरति सर्व्वसत्त्वाश्च विरागचित्तेन स्थिताः ।

भगवानाह ;—

उत्तिष्ठ कारुण्यपुण्यसुदृष्टमानसो
व्याकृतस्त्वं दशदिशि वरदेहधारणीप्रकम्पिता ।
धरणीचैवषड्विकारो भविष्यसि
जिनोपपुङ्गलो महर्षिः ॥

अथ खलु समुद्ररेणुर्ब्राह्मणोऽग्रपुरोहितो द्वितीयं राजपुत्रं निमिनामामन्त्रयामास । एवं चानुमोदस्व त्वं कुलपुत्रेमां महापरित्यागां यत्र त्वया शुभमुपार्ज्जितं तत् सर्व्वं सत्त्वेभ्यो

सर्व्वज्ञतायां परिणामय । उत्पादय चित्तमनुत्तरायां सम्यक्सम्बोधौ । न केवलमस्मिन् क्लिष्टे बुद्धक्षेत्रे बोधिमहं स्पृशेयं यथावलोकितेश्वरः सर्व्वरत्नसन्निचयायां लोकधातावनेकरत्नव्यूहे बोधिवृक्षे निषण्णोऽनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यते । समन्तरश्म्यभ्युद्गतश्रीकूटराजो नाम तथागतो भविष्यति । तमहमध्येषयेयम् धर्म्मदेशनायां यावदसौ तथागतो धर्म्मं देशयेत्तावदहं बोधिसत्त्वचर्य्यां चरेयं । तस्य तथागतस्यास्तं गतस्य सद्धर्म्मेऽन्तर्हिते तस्यानन्तरेणाहं सम्यक्सम्बोधिमभिसम्बुद्धेयं । एवंरूपं मे बुद्धक्षेत्रं भवेद्गुणव्यूहेन । एवमेवाहं बुद्धकार्य्यं कुर्य्यामेवमेव परिनिर्व्वापयेयम् । एवमेव परिनिर्वृतस्य सद्धर्म्मश्चिरं तिष्ठेत् सर्व्वं एव गुणव्यूहः । यथा समन्तरश्म्यभ्युद्गतश्रीकूटराजस्य तथागतस्य ।

भगवानाह ;—

महास्थामं ते कुलपुत्र प्रार्थितं । प्राप्स्यसि त्वं कुलपुत्रैवंरूपं स्थानं यथा त्वया परिगृहीतं । प्राप्स्यसि त्वं कुलपुत्र तस्मिन् बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिं । सुप्रतिष्ठितगुणमणिकूटराजो नाम तथागतो भविष्यसि । तथास्थामं ते कुलपुत्र महास्थामं परिगृहीतं तेन त्वं कुलपुत्र महास्थामप्राप्तो भवस्व ।

स प्राह । यदि मे भगवन्नेषाशा परिपूर्य्यते । तद्य यदाहं भगवतः पद्ममण्डलकेन कायेन पादौ वन्दामि तदा मे दशसु दिक्षु गङ्गानदीवालिकासमा बुद्धा भगवन्तो व्याकुर्व्वन्तु । सुमनावर्षञ्च प्रवर्षन्तु । यदा कुलपुत्र महास्थामप्राप्तेन मत्पुरुषेण रत्नगर्भस्य पद्ममण्डलकेन पादाभिवन्दनं कृतं तदा गङ्गानदीवालिकासमेषु दशसु दिक्षु गङ्गानदीवालिकासमैर्बुद्धैर्भगवद्भिर्व्याकृतः षड्विकारं च महापृथिवी प्रचलिता । सुमनावृष्टिश्च प्रवर्षिता ।

भगवानाह ;—

उत्तिष्ठ दृढस्थामवेगपुण्यव्याकृतदशदिशि लोकनाथैः ।
चलिता महापृथिवी वृष्टि दृष्टा सुमनावर्षैर्भविष्यसि त्वं सुरनरमह्यभूतः ॥

अथ समुद्ररेणुर्ब्राह्मणस्तृतीयं राजपुत्रमिन्द्रगणं नामामन्त्रयति स्म । ये या त्वं पूर्व्ववत् प्रतिगृह्याञ्जलिं रत्नगर्भं तथागतमेतदवोचत् । अन्यथा भगवान् सर्व्वोपकरणैरुपस्थितः सार्द्धं भिक्षुसंघेन । यच्च मे कायवाङ्मनः सुचरितं इदं चानुमोदनामहागतं पुण्यस्कन्धं । एतत् सर्व्वमनुत्तरायां सम्यक्सम्बोधौ परिणामयामि । असंक्लिष्टे बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धेयं । नचातिचिरं प्राप्नुयाम् न यावच्चाहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धेयं । तावद्बोधिचर्य्यां चरन् दशसु दिक्ष्वनन्तापर्यन्तेषु अन्येषु लोकधातुषु बुद्धान् भगवतः पश्येयं ये मया प्रथमं बोधाय समादापिता येषां मया तत् प्रथमं बोधिचित्तमुत्पादितं बोधिचित्ते प्रतिष्ठापिताः पारमितासु च ये मया समादापिता निवेशिता प्रतिष्ठापिता बोधिचर्य्यां चरता । तानहं दिव्येन चक्षुषा गङ्गानदीवालिकासमे बुद्धक्षेत्रे परमाणुरजःसमेषु बुद्धक्षेत्रेषु बुद्धान् भगवतो धर्म्मं देशयतः पश्येयं । ये मया बोधाय समादापिताः । एवमहं बोधिसत्त्वचर्य्यां चरन् बुद्धकार्य्यं कुर्य्यां तावदहं बोधिसत्त्वचर्य्यां चरेयं सत्त्वानामाशयपरिशोधयमानः । यावन्तः केचित्

सत्त्वा मम बुद्धक्षेत्र उपपद्येरन् । न एवंविधाः स्युः । तद्यथा ब्रह्मकायिका देवाः । तथा
बुद्धक्षेत्रगुणव्यूहं परिशोधयेयम् । यथा गङ्गानदीवालिकासमं त्रिसाहस्रमहासाहस्रं एकं
बुद्धक्षेत्रं स्यात् तस्य बुद्धक्षेत्रस्य भवाग्रपर्य्यन्तानि प्राकाराणि अनेकरत्नसंछादितानि नानारत्न-
प्रत्युप्तानि च स्युः सर्व्वा च तत्र बुद्धक्षेत्रे शुद्धवैदूर्य्यमयी पृथिवी स्यात् अपगतरजःपाषाणशर्करा-
पगतकलुषसंस्पर्शा धरणी स्यात् न तत्र मातृग्रामस्य नाम प्रज्ञप्तिः स्यात् सर्व्वसत्त्वाश्चोप-
पादुकाः स्युर्न तत्र सत्त्वाः कवडिङ्काहाराः स्युः सर्व्वे च तत्र सत्त्वाः प्रीत्याहारा धर्म्माहाराः
स्युः । न तत्र बुद्धक्षेत्रे श्रावकप्रत्येकबुद्धानां प्रज्ञप्तिः स्यात् शुद्धानां बोधिसत्त्वानां । अपगत-
खिलमलद्वेषसत्त्वानां शुद्धानां ब्रह्मचारिणां बुद्धक्षेत्रं परिपूर्णं स्यात् सर्व्वे तत्र बोधिसत्त्वा
मुण्डाः काषायवस्त्रधारिणः प्रादुर्भवेयुः समनन्तरप्रादुर्भूतानां सहावभासं भवन्तेषां दक्षिणे हस्ते
रत्नपात्राणि नानान्नपूर्णं प्रादुर्भवेत् समनन्तरे प्रादुर्भूतायां एवंरूपां स्मृतिं प्रतिलभेयुर्नास्माकं
प्रतिरूपं ये वयं कवडिङ्काहारमाहरेम यन्नूनं वयमन्यासु लोकधातुषु गत्वा बुद्धान् भगवत-
स्तिष्ठतो यापयतोऽनेनाहारेण प्रतिमानयामो बुद्धश्रावकांश्च यद्वत् प्रतिमानयामः प्रेतभवनेषु
च गत्वा क्षुत्तर्षप्रज्वलितगात्रान् सत्त्वानेनाहारेण प्रतिमानयामः । सहचित्तोत्पादेन ते
बोधिसत्त्वा महासत्त्वा अचिन्त्यचारित्रवतीं नाम समाधिं प्रतिलभेयुः । तस्य च समाधेः
प्रतिलाभाऽखण्डितो दशसु दिक्षु असंख्येयेष्वन्येषु बुद्धक्षेत्रेषु गच्छेयुः तिष्ठतो यापयतो बुद्धान्
भगवत आहारेण प्रतिमानयेयुः । श्रावकांश्चान्यांश्च सत्त्वान् यथाप्रतिमान्यधर्म्मदेशनां कृत्वा
तेनैव पूर्व्वभक्तेन स्वबुद्धक्षेत्रमागच्छेयुः । एवं चीवररत्नानि यानेनैव पूर्व्वभक्तेन स्वकं
बुद्धक्षेत्रमागम्यान्योन्यं चीवरेण प्रावरयेयुः । यावन्ति च तत्र बुद्धक्षेत्रे तेषां बोधिसत्त्वाना-
मुपभोगपरिभोगा भवेयुस्तैः सर्व्वैर्बुद्धैः श्रावकैश्चान्यैश्च सत्त्वैः सहसा धारणं कृत्वा यथाशास्तमना
परिभुञ्जीयुः । अष्टाक्षणवर्ज्जितं च बुद्धक्षेत्रं भवेत् । न च तत्र दुःखशब्दो भवेत् । न शिक्षा-
ग्रहणशब्दः आपत्तिव्युत्थानशब्दोऽपि न भवेत् । अनेकरत्नशतसहस्रोपचितं तद्बुद्धक्षेत्रं
स्यात् । अनेकरत्नप्रत्युप्तमणिसन्दर्शनसदृशं भवेत् । यानि मणिरत्नानि दशसु दिक्षु पूर्व्वाणि
तानि अघृतपूर्व्वाणि तानि मणिरत्नानि प्रवरेयुः । येषां मणिरत्नानां नामधेये निर्द्दिश्यमाने
वर्षकोट्योऽपि क्षयं गच्छेयुः । यश्च बोधिसत्त्वः । आकाङ्क्षेत स्वर्णमयमेव बुद्धक्षेत्रं पश्येयं ।
तस्य स्वर्णमयमेव तिष्ठेत् । यो रूप्यमयमाकाङ्क्षेत सरूप्यमयं पश्येत् न चास्य सुवर्णमयं परि-
भावयेयं पेयालं पूर्व्ववत् य आकाङ्क्षेत स्फटिकमयं वैदूर्य्यमयमश्मगर्भमयं लोहितमुक्तामयं
मुसारगल्वमय एवंविधं तद्बुद्धक्षेत्रं पश्येम इत्याकाङ्क्षेयुः । अगुरुमयं तगरमयं तमाल-
पत्रमयं यो बोधिसत्त्व आकाङ्क्षे(त) गोशीर्षचन्दनमयं तद्बुद्धक्षेत्रं द्रष्टुं तस्य तथैव स्यात् ।
यथा यथा यादृशमाकाङ्क्षेयु । तथा तथा तादृशं स्यात् नचैको द्वितीयस्य प्रणिधिः स्यात्
सर्व्वथासेव प्रणिधिः परिपूर्य्यते । न च तत्र बुद्धक्षेत्रे सूर्य्याचन्द्रमसौ प्रज्ञायेयातां ।
स्वयंप्रभाश्च तत्र बोधिसत्त्वा प्रत्याजायेयुः । अन्यां यादृशीं प्रभामाकाङ्क्षेरन् तादृशी-
मुत्सृजेयुः । अन्ततो बुद्धक्षेत्रकोटिनियुतशतसहस्रेष्वपि न च तत्र बुद्धक्षेत्रे रात्रिन्दिवसानां
नामधेयमपि प्रज्ञायते । अन्यत्र कुसुमविकसनतया । न च तत्र बुद्धक्षेत्रे शीतोष्णं प्रज्ञायेत
न व्याधिर्न्नग्लान्यं न जरामरणं अन्यत्र यो बोधिसत्त्व आकाङ्क्षेद्बोधिमभिसम्बोद्धुं सोऽन्यत्र

लोकधातावुषित्वा आयुःक्षपयित्वा बोधिमभिसंबुध्येत । न तत्र बुद्धक्षेत्रे मरणं* भवेयुः । अनुत्तरपरिनिर्व्वाणो न उपर्य्यन्तरीक्षे तथागतपरिनिर्व्वाणं स्यात् । यादृग्जातीयांश्च बोधिसत्त्व उपभोगपरिभोगमाकाङ्क्षेरन् तादृग्जातीया अभिनिवर्त्तेयुः सर्व्वत्र च बुद्धक्षेत्रे गगणतले तूर्य्यकोटिनियुतशतसहस्रा वाद्येयुः । न च तेभ्यस्तूर्य्येभ्यः कामोपसंहिताः शब्दा निश्चरेयुः । अन्यत्र पारमिता शब्दा निश्चरेयुः । बुद्धशब्दो धर्म्मशब्दः संघशब्दो बोधिसत्त्व-पिटकधर्म्मपर्य्यायशब्दो निश्चरेत् । यथाधिमुक्ता बोधिसत्त्वास्तादृग्जातीयान् शब्दान् शृणुयुः । बोधिसत्त्वचारिकाञ्चाहं भगवंश्चरमाणो यावन्त्यप्रमेयेष्वसंख्येयेषु बुद्धकोटिनियुतशतसहस्रेषु बुद्धक्षेत्रेषु गुणव्यूहा दृष्टाः सोऽलङ्काराश्चानि तानि निमित्तानि तानि स्थानानि तानि प्रणिधानानि । सर्व्वेषु मम बुद्धक्षेत्रे प्रविशेयुः स्थापयित्वा श्रावकप्रत्येकबुद्धव्यूहां । पञ्चकषायिकांश्च बुद्धक्षेत्रगुणव्यूहां । तत्र तत्र बुद्धक्षेत्रे नरकतिर्य्यक्प्रेताः प्रज्ञायेयुर्न सुमेरुर्न चक्रवाडमहाचक्रवाडाश्मशिलोपांशुपर्व्वताः प्रज्ञायेयुः न महासमुद्रा नद्यान्ये काष्ठसुता भवेयुर्व्यातिक्रान्तैर्नानालक्षैस्तद्बुद्धक्षेत्रमाकीर्णं स्यात् । अन्यत्र दिव्यैः कुसुमैः मान्दारवमहामान्दारवैर्न च तत्र दुर्गन्धं स्यान्नानागन्धैरुदारोदारैस्तद्बुद्धक्षेत्रं स्फुटं स्यात् सर्व्वसत्त्वैकजातिप्रतिबद्धा बोधिसत्त्वा उत्पद्येरन् तत्रैकसत्त्वः स्यात् यस्ततश्च्यवित्वाऽन्यत्र प्रत्याजायेत । अन्यत्र तुषितेभ्यः ततश्च्युतोऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येत । तावदहं भदन्त भगवन् बोधिसत्त्वचर्य्यां चरिष्यामि यावन्नैवंविधं महापुरुषकारमभिनिष्पादयिष्यामि । एवंरूपं बुद्धक्षेत्रं स्थापयिष्यामि । एवंरूपैः शुद्धाशयैः सत्त्वैरेकजातिप्रतिबद्धैर्बोधिसत्त्वैः सार्द्धं तद्बुद्धक्षेत्रमाकीर्णं प्रतिष्ठापयिष्यामि । न तत्र बोधिसत्त्वः स्याद् यो न मया प्रथमं बोधाय समादापितः स्यात् सर्व्वे तत्र बोधिसत्त्वाः प्रत्याजायेयुः । ये मया प्रथमं बोधाय समादापिताः पारमितासु निवेशिताः । तत्रैवेदं बुद्धक्षेत्रमन्तर्गतं कुर्य्यां सर्व्वं यावो दुःखप्रशमयेयं । बोधिसत्त्वभूतोऽहं भदन्त भगवन् । एवंरूपं पुरुषकारं निष्पादयेयं ततः पश्चात्तत्र बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । दशचातुर्द्वीपिकसहस्रप्रमाणो मे बोधिवृक्षः परिणाहेन स्यात् यत्ररत्नविचित्रसन्दर्शनो नाम भवेत् । दशत्रिसाहस्रः समन्तपरिणाहेन तस्य च बोधिवृक्षस्य गन्धेनाहं या च कृत्स्नं बुद्धक्षेत्रं स्फुटं स्यात् तस्य मूले पञ्चचातुर्द्वीपिकप्रमाणं मे नानारत्नविचित्रं वज्रासनं स्यात् प्रशमयस्य† सुविचितज्ञानगन्धसमवसरणं नाम भवेच्चतुरशीतियोजनान्युच्चत्वेन । तत्राहं बोधिवृक्षस्य मूले वज्रासने निषीदेयं । पर्य्यङ्कमाभुज्यैकेन चैव मुहूर्त्तेनानुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । यावत्परिनिर्व्वाणकालं तत्पर्य्यङ्कमभिद्या न भुञ्जेयं । न तस्माद्बोधिवृक्षमूलादुत्तिष्ठेयं । बोधिवृक्षमूलस्थ एवाहं वज्रासने निषण्णोऽहं निर्म्मितान् बुद्धान् बोधिसत्त्वांश्च गणनातिक्रान्तेष्वन्येषु बुद्धक्षेत्रेषु प्रेषयेयं । एकैको बुद्ध एकपूर्व्वभक्तेन सत्त्वानां धर्म्मं देशयेत् येनैव पूर्व्वभक्तेन गणनातिक्रान्तान् सत्त्वाननुत्तरायां सम्यक्सम्बोधौ समादापयेयुः प्रतिष्ठापयेयुः अवैवर्त्तिकां स्थापयेयुः ।

---

* अत्र मरणानि इति पाठः साधुः ।

† प्रशमघण्टे इति पाठो युक्तः ।

सत्त्वा मम बुद्धक्षेत्र उपपद्येरन् । त एवंविधाः स्युः । तद्यथा ब्रह्मकायिका देवाः । तथा बुद्धक्षेत्रगुणव्यूहं परिशोधयेयम् । यथा गङ्गानदीवालिकासमं त्रिसाहस्रमहासाहस्रं एकं बुद्धक्षेत्रं स्यात् तस्य बुद्धक्षेत्रस्य भवाग्रपर्य्यन्तानि प्राकाराणि अनेकरत्नसंस्थितानि नानारत्नपर्य्युप्तानि च स्युः सर्व्वा च तत्र बुद्धक्षेत्रे शुद्धवैडूर्य्यमयी पृथिवी स्यात् अपगतरजःपाषाणशर्करापतितकलुषसंस्पर्शा धरणी स्यात् न तत्र मातृग्रामस्य नाम प्रज्ञप्तिः स्यात् सर्व्वसत्त्वाश्चोपपादुकाः स्युर्न तत्र सत्त्वाः कवडिंकाराहाराः स्युः सर्व्वे च तत्र सत्त्वाः प्रीत्याहारा धर्म्माहाराः स्युः । न तत्र बुद्धक्षेत्रे श्रावकप्रत्येकबुद्धानां प्रज्ञप्तिः स्यात् शुद्धानां बोधिसत्त्वानां । अपगतक्लेशमलदोषप्रहाणां शुद्धानां ब्रह्मचारिणां बुद्धक्षेत्रं परिशुद्धं स्यात् सर्व्वे तत्र बोधिसत्त्वा मुण्डाः काषायवस्त्रधारिणः प्रादुर्भवेयुः समनन्तरप्रादुर्भूतानां महार्घभाजनं भवत्वेषां दक्षिणे हस्ते रत्नपात्रं नानारत्नपूर्णं प्रादुर्भवेत् समनन्तरे प्रादुर्भूतायां एवंरूपां स्मृतिं प्रतिलभेयुर्नानार्थं प्रतिरूपं ये वयं कवडीकाराहारेण यन्नूनं वयमन्यासु लोकधातुषु गत्वा बुद्धान् भगवतस्तिष्ठतो यापयतोऽनेनाहारेण प्रतिमानयामो बुद्धश्रावकांश्च यच्चान्यं प्रतिमानयामः प्रेतभवनेषु च गत्वा क्षुत्पिपासार्दितान् सत्त्वाननेनाहारेण प्रतिमानयामः । सहचित्तोत्पादेन ते बोधिसत्त्वा महासत्त्वा अचिन्त्यगोचरविषयतो नाम समाधिं प्रतिलभेयुः । तस्य च समाधेः प्रतिलाभाद्व्रजन्तो दशसु दिक्षु असंख्येयेषु बुद्धक्षेत्रेषु गच्छेयुः तिष्ठतो यापयतो बुद्धान् भगवत आहारेण प्रतिमानयेयुः । श्रावकांश्चान्यांश्च सत्त्वान् प्रत्याप्रतिमान्य धर्म्मदेशनां कृत्वा तेनैव पूर्व्वभक्तेन स्वबुद्धक्षेत्रमागच्छेयुः । एवं चीवररत्नानि यानेनैव पूर्व्वभक्तेन स्वकं बुद्धक्षेत्रमागम्यान्येषां चीवरेण मानयेयुः । यानि च तत्र बुद्धक्षेत्रे तेषां बोधिसत्त्वानामुपभोगपरिभोगा भवेयुस्ते सर्व्वैर्बुद्धैः श्रावकैश्चान्यैश्च सत्त्वैः सहसा धारणं कृत्वा यथात्मना परिभुञ्जीयुः । अष्टाक्षणवर्जितं च बुद्धक्षेत्रं भवेत् । न च तत्र दुःखशब्दो भवेत् । न शिक्षापदप्रशब्दः आपत्तिव्युत्थानशब्दोऽपि न भवेत् । अनेकरत्नशतसहस्रोपचितं तद्बुद्धक्षेत्रं स्यात् । अनेकरत्नप्रत्युप्तपरिमण्डनसदृशं भवेत् । यानि मणिरत्नानि दशसु दिक्षुबुद्धपूर्व्वाणि तानि अद्भुतपूर्व्वाणि तानि मणिरत्नानि प्रवरेयुः । येषां मणिरत्नानां नामधेयं निर्दिश्यमाने पर्य्यन्तोऽपि क्षयं गच्छेयुः । यश्च बोधिसत्त्वः । आकाङ्क्षेत स्वर्णमयमेव बुद्धक्षेत्रं पश्येयं । तस्य स्वर्णमयमेव तिष्ठेत् । यो रूप्यमयमाकाङ्क्षेत सर्व्वरूप्यमयं पश्येत् यथास्य सुवर्णमयं परिभावेत् तेषामपि पूर्व्ववत् य आकाङ्क्षेत स्फटिकमयं वैडूर्य्यमयमश्मगर्भमयं लोहितमुक्तामयं मुसारगल्वमयं एवंविधं तद्बुद्धक्षेत्रं पश्येत् इत्याकाङ्क्षेयुः । अगुरुमयं तगरमयं तमालपत्रमयं यो बोधिसत्त्व आकाङ्क्षे(त) गोशीर्षचन्दनमयं तद्बुद्धक्षेत्रं द्रष्टुं तस्य तथैव स्यात् । यथा यथा यादृशमाकाङ्क्षेयु । तथा तथा तादृशं स्यात् नचैको द्वितीयस्य प्रतिधिः स्यात् सर्व्वैषामेव प्रतिधिः परिपूर्य्यते । न च तत्र बुद्धक्षेत्रे सूर्य्यचन्द्रमसौ प्रज्ञायेयातां । स्वप्रभया तत्र बोधिसत्त्वा प्रकाशयेयुः । अन्ये यादृशीं प्रभामाकाङ्क्षेरन् तादृशीमुत्सृजेयुः । अनन्तो बुद्धक्षेत्रकोटिनियुतशतसहस्रेष्वपि न च तत्र बुद्धक्षेत्रे रात्रिन्दिवमानां नामधेयमपि प्रज्ञायते । अन्यत्र कुसुमविकसनतया । न च तत्र बुद्धक्षेत्रे शीतोष्णं प्रज्ञायेत न व्याधिसंज्ञानं न जरामरणं अन्यत्र यो बोधिसत्त्व आकाङ्क्षेद्बोधिमभिसम्बोद्धुं सोऽन्यत्र

लोकधातावुषित्वा आयुःक्षपयित्वा बोधिमभिसंबुध्येत । न तत्र बुद्धक्षेत्रे मरणं* भवेयुः । अनुत्तरपरिनिर्व्वाणो न उपर्य्यन्तरीक्षे तथागतपरिनिर्व्वाणं स्यात् । यादृग्जातीयांश्च बोधिसत्त्व उपभोगपरिभोगमाकाङ्क्षेरन् तादृग्जातीया अभिनिवर्त्तेयुः सर्व्वत्र च बुद्धक्षेत्रे गगनतले तूर्य्यकोटिनियुतशतसहस्रा वाद्येयुः । न च तेभ्यस्तूर्य्येभ्यः कामोपसंहिताः शब्दा निश्चरेयुः । अन्यत्र पारमिता शब्दा निश्चरेयुः । बुद्धशब्दो धर्म्मशब्दः संघशब्दो बोधिसत्त्वपिटकधर्म्मपर्य्यायशब्दो निश्चरेत् । यथाधिमुक्ता बोधिसत्त्वास्तादृग्जातीयान् शब्दान् शृणुयुः । बोधिसत्त्वचारिकामहं भगवंश्चरमाणो यावन्मयाप्रमेयेष्वसंख्येयेषु बुद्धकोटिनियुतशतसहस्रेषु बुद्धक्षेत्रेषु गुणव्यूहा दृष्टास्तेऽलङ्कारास्तानि तानि निमित्तानि तानि स्थानानि तानि प्रणिधानानि । सर्व्वत्र मम बुद्धक्षेत्रे प्रविशेयुः स्थापयित्वा श्रावकप्रत्येकबुद्धव्यूहा । पञ्चकषायिकाश्च बुद्धक्षेत्रगुणव्यूहा । तत्र तत्र बुद्धक्षेत्रे नरकतिर्य्यक्प्रेताः प्रज्ञायेयुर्न सुमेरुर्न चक्रवाड्महाचक्रवाड्मशिलोपांशुपर्व्वताः प्रज्ञायेयुः न महासमुद्रा नचान्ये काष्ठवृक्षा भवेयुर्दिव्यातिक्रान्तैर्नानारत्नैश्चित्तं बुद्धक्षेत्रमाकीर्णं स्यात् । अन्यत्र दिव्यैः कुसुमैः मान्दारवमहामान्दारवैर्न च तत्र दुर्गन्धं स्यान्नानागन्धैस्तदौदारैः सद्बुद्धक्षेत्रं स्फुटं स्यात् सर्व्वसत्त्वैकजातिप्रतिबद्धा बोधिसत्त्वा उत्पद्येरन् तत्रैकसत्त्वः स्यात् यस्ततश्चावित्वाऽन्यत्र प्रत्याजायेत । अन्यत्र तुषितेभ्यः ततश्च्युतोऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येत । तावदहं भदन्त भगवन् बोधिसत्त्वचर्य्यां चरिष्यामि यावन्नैवंविधं महापुरुषकारमभिनिष्पादयिष्यामि । एवंरूपं बुद्धक्षेत्रं स्थापयिष्यामि । एवंरूपैः शुद्धाशयैः सत्त्वैरेकजातिप्रतिबद्धैर्बोधिसत्त्वैः मात्रं तद्बुद्धक्षेत्रमाकीर्णं प्रतिष्ठापयिष्यामि । न तत्र बोधिसत्त्व स्याद् यो न मया प्रथमं बोधाय समादापितः स्यात् सर्व्वे तत्र बोधिसत्त्वाः प्रत्याजायेयुः । ये मया प्रथमं बोधाय समादापिताः पारमितासु निवेशिताः । तत्रैवेदं बुद्धक्षेत्रमन्तर्गतं कुर्य्यां सर्व्वं चामी दुःखाप्रशमयेयं । बोधिसत्त्वभूतोऽहं भदन्त भगवन् । एवंरूपं पुरुषकारं निष्पादयेयं ततः पश्चात्तत्र बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । दशचातुर्द्वीपिकसहस्रप्रमाणो मे बोधिवृक्षः परिणाहेन स्यात् एतद्रत्नविचित्रसन्दर्शनो नाम भवेत् । दशभिसाहस्रः समन्तपरिणाहेन तस्य च बोधिवृक्षस्य गन्धेनाह या च कृत्स्नं बुद्धक्षेत्रं स्फुटं स्यात् तस्य मूले पञ्चचातुर्द्वीपिकप्रमाणं मे नानारत्नविचित्रं वज्रासनं स्यात् प्रशमसत्त्व† सुविचितज्ञानगन्धसमवशरणं नाम भवेच्चतुरशीतियोजनान्युच्चत्वेन । तस्याहं बोधिवृक्षस्य मूले वज्रासने निषीदेयं । पर्य्यङ्कमाभुज्यते सैव मुहूर्त्तेनानुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । यावत्परिनिर्व्वाणकालं तत्पर्य्यङ्कमभिन्द्यां न मुञ्चेयं । न तस्माद्बोधिवृक्षमूलादुत्तिष्ठेयं । बोधिवृक्षमूलस्थ एवाहं वज्रासने निषण्णोऽहं निर्म्मितान् बुद्धान् बोधिसत्त्वांश्च गणनातिक्रान्तेष्वन्येषु बुद्धक्षेत्रेषु प्रेषयेयं । एकैको बुद्ध एकपूर्व्वभक्तेन सत्त्वानां धर्म्मं देशयेत् तेनैव पूर्व्वभक्तेन गणनातिक्रान्तान् सत्त्वाननुत्तरायां सम्यक्सम्बोधौ समादापयेयुः प्रतिष्ठापयेयुः अवैवर्त्तिकां स्थापयेयुः ।

---

* अथ मरणानि इति पाठः साधुः ।

† प्रशमवत्ये इति पाठो युक्तः ।

एवं निर्म्मिता बोधिसत्त्वा बोधिसत्त्वकार्य्यं कुर्य्युः। बोधिप्राप्तस्य मे गणनातिक्रान्तेषु दशसु दिक्ष्वन्यासु लोकधातुषु मम कायो दृश्येत। येषां च सत्त्वानां मम कायो लक्षणालङ्कृतश्चक्षुरिन्द्रियस्याभासमागच्छेत्। सर्व्वे ते सत्त्वा नियता भवेयुरनुत्तरायां सम्यक्सम्बोधौ। यावद्बोधिपरिनिर्व्वाणेन ते सत्त्वा अविरहिता भवेयुः बुद्धैर्भगवद्भिः। न तत्रेन्द्रियविकला भवेयु र्ये च तत्र बोधिसत्त्वा मां द्रष्टुमिच्छेयुस्ते येन येनैव गच्छेयुः। परिवर्त्तयुः। चंक्रमेयुर्निषीदेयुः तिष्ठेयुः सर्व्वे ते बोधिसत्त्वाः समनन्तरोत्थापितेन बुद्धनमस्कारचित्तेन मां बोधिवृक्षनिषण्णं पश्येयुः। दृष्ट्वा च यस्य धर्म्मे संशयः स्यात् सोऽस्य सह दर्शनेन विगच्छेत् तीर्णविचिकित्सः स्यादनुपश्लिष्टश्च धर्म्मपदस्यार्थमाजानेयुः। अप्रमादं मे स्युर्भवेत् न शक्यते केनचिद्दूषयितुं। अन्यत्र सार्व्वज्ञेन ज्ञानेन। अप्रमादाश्च तत्र बोधिसत्त्वा भवेयुः। यस्मिंश्च क्षणेऽहं तत्र बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं तस्मिन् क्षणे तत्र बुद्धक्षेत्रे बोधिसत्त्वा मुण्डाः काषायप्रावृताः सम्भवेयुः। यावन्मम परिनिर्व्वाणन्न चात्र बुद्धक्षेत्रे एकसत्त्वोऽपि दीर्घकेशः स्यात् मुण्डमात्ररूपो वा। सर्व्व एव श्रमणरूपाः स्युः श्रमणप्रतिरूपाधिष्ठेयुः।

भगवानाह। साधु साधु सत्पुरुष त्वमपि पण्डितो व्यक्तो मेधावी अतीवशोभनं ते प्रणिधानं कृतं। अतीवगुणप्रणिधानमतीवज्ञानज्ञान् यत्त्वं कुलपुत्र सर्व्वसत्त्वानामपायपिधंदर्पां प्रवरां प्रशस्तां मतिं कृतवान् प्रवरो बुद्धक्षेत्रगुणव्यूहः परिगृहीतः। ततस्ते कुलपुत्र मञ्जुश्रीर्नाम भवतु। भविष्यसि त्वं मञ्जुश्रीरनागतेऽध्वनि अतिक्रान्तयोर्द्वयो र्नदीवालिकासमयोरसंख्येययोः प्रविष्टे च तृतीये संख्येये दक्षिणस्यां दिशि शुद्धविरजः सन्निचयो नाम लोकधातुर्भविष्यति तत्र च महालोकधातुरुत्तरोत्तरा भविष्यति अनुपश्चिम। एवंरूपा गुणव्यूहा सद्बुद्धक्षेत्रं प्रादुर्भविष्यति। तत्र त्वं मञ्जुश्रीरनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे। समन्तदर्शी नाम तथागतो भविष्यसि अर्हन् सम्यक्सम्बुद्धः। एवंरूपा च ते बोधिसत्त्वपर्षद्भविष्यति सर्व्वे च ते प्रणिधानाश्चैव सम्पत्स्यन्ते। यथा त्वया प्रणिधानं कृतं बोधिसत्त्वभूतेन ततस्त्वं बहुबुद्धकोटीनयुतशतकुशलमूलो भविष्यसि। आशयपरिशोधकश्च क्लेशप्रमर्द्दकाः। ये च ते मञ्जुश्रीः सत्त्वा नाम श्रोष्यन्ति। तेषां सर्व्वकर्म्मावरणक्षयो भविष्यति। कुशले नियतकाश्च भविष्यन्ति। मञ्जुश्रीराह। यदि मे भगवन्नेवंरूपा आशयपरिपूरिर्भवेदिति यथा मे प्रणिधानं कृतं तथा चैव मां बुद्धा भगवन्तो व्याकुर्व्वन्तु। ये दशसु दिक्ष्वप्रमेयासंख्येयेषु लोकधातुषु तिष्ठन्ति यापयन्ति। सत्त्वानां च धर्म्मं देशयन्ति। तथाप्रमेयासंख्येया बुद्धक्षेत्राः प्रकम्पन्तु सर्व्वसत्त्वाश्चैवंरूपेण सुखेन समर्पिता भवन्तु। तद्यथा तृतीयध्यानसमापन्नस्य बोधिसत्त्वस्य तथाप्रमेयासंख्येयेभ्यो बुद्धक्षेत्रेभ्यो दिव्यमान्दारवपुष्पाण्यभिप्रवर्षन्तु। तेभ्यश्च मान्दारवेभ्य एवंरूपः शब्दो निश्चरतु। यदुत बुद्धशब्दो धर्म्मशब्दः संघशब्दः पारमिताशब्दः बलवैशारद्यशब्दश्च निश्चरतु। यदा च भगवतः पञ्चमण्डलेन पादौ वन्देय तदा चैवंरूपं निमित्तं प्रादुर्भवेत्। यदा च मञ्जुश्रिया कुमारभूतेन भगवतः पादाभिवन्दनं कृतं तदा तत्क्षणादेवमप्रमेयासंख्येया बुद्धक्षेत्राः प्रकम्पिता दिव्यानि च मान्दारवाण्यभिप्रवर्षितानि सर्व्वसत्त्वाश्चैवंरूपेण सुखेन समर्पिता

अभवन् यथा प्रणिधानं कृतं ये च बोधिसत्त्वा महासत्त्वास्तेषां बुद्धानां भगवतां धर्मं शृण्वन्ति ते तान् बुद्धान् भगवतः परिपृच्छन्ति। कोऽत्र हेतुः कः प्रत्ययः एवंरूपाणां निमित्तानां प्रादुर्भावाय। ते च बुद्धा भगवन्तो मञ्जुश्रियं कुमारभूतं व्याकुर्व्वन्ति। अनुत्तरायां सम्यक्सम्बोधौ।

भगवानाह।

उत्तिष्ठ प्रवरमति विशालबुद्धे,

व्याकृतस्त्वं दशदिशि लोकनाथैः।

चलिता चितिः तर्पिता सत्त्वाः,

मौख्येयुष्माः प्रहृष्टा भेष्यसे बुद्ध इति॥

अथ खलु कुलपुत्र! समुद्ररेणुर्ब्राह्मणस्तुर्यं राजपुत्रमनङ्गणं नामामन्त्रयति। पेयालं यथा मञ्जुश्रिया प्रणिधानं कृतं। तस्य भगवान् साधुकारमनुप्रादासीत् साधु साधु कुलपुत्र बोधिसत्त्वभूतस्त्वं कुलपुत्राप्रमेयासंख्येयानां सत्त्वानां क्लेशपर्व्वतान् भेत्स्यसि बुद्धकार्य्यं च करिष्यसि। ततः पश्चादनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे। तेन त्वं कुलपुत्र वज्रच्छेदे प्रभावभासश्रीर्नाम बोधिसत्त्वो भवस्व भविष्यसि त्वं वज्रच्छेदप्रभासानागते-ऽध्वन्यतिक्रान्तानामेकगङ्गानदीवालिकानामसंख्येयेऽनुप्रविष्टे द्वितीये गङ्गानदीवालिकासंख्येये पुरि सायां दिशि दशगङ्गानदीवालिकासमान् बुद्धक्षेत्रपरमाणुरजः-समांल्लोकधातूनतिक्रम्य तत्रानिमिषानाम लोकधातुर्भविष्यति तत्र त्वं कुलपुत्र बोधिमभिसम्भोत्स्यसि समन्तभद्रो नाम तथागतोऽर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नो यावद्बोधि भगवानेवंरूपं च ते बुद्धक्षेत्रमनेकगुणव्यूहितं भविष्यति यथा प्रणिधानं कृतं समनन्तरव्याकृतस्य कुलपुत्र रत्नगर्भेण तथागतेन वज्रच्छेदप्रभावभासो बोधिसत्त्वोऽनुत्तरायां सम्यक्सम्बोधौ। गगणतले गतान्येन कानि देवकोटिनियुतशतसहस्राणि साधुकारमदुर्गाश्रीर्णारगसारचन्दनागरुतमाल-चूर्णं च प्रावर्षुः।

स आह। यदि मे भदन्त भगवन्नेवंरूपाशा परिपूर्य्येत तद्यथाहं भगवन्तं पञ्चमण्डलेन वन्देयम्। तदा गङ्गानदीवालिकासमा लोकधातवो दिव्यातिक्रान्तेनोदारेण गन्धेन स्फुटा भवेयुः। ये च तत्र लोकधातुषु सत्त्वा उपपन्ना भवेयुः। नैरयिका वा तैर्य्यग्योनिका वा यामलौकिका वा देवा वा मनुष्या वा ते सर्व्वे तं गन्धं घ्रायेयुः। तेषां कायव्याधिः कायदुःखं चित्तव्याधिः चित्तदुःखं च तावच्चिरं प्रशान्तं भवेत् यावदहं शीर्षेण पृथिवीं स्पृशेयं।

अथ खलु कुलपुत्र वज्रच्छेदप्रभावभासो बोधिसत्त्वो रत्नगर्भस्य तथागतस्य पञ्च-मण्डलेन पादौ वन्दते। अथ तावदेव गङ्गानदीवालिकासमा लोकधातवो दिव्याति-क्रान्तेनोदारेण गन्धेन स्फुटा बभूवुः। सर्व्वेषां च सत्त्वानां कायव्याधिश्चित्तव्याधिः कायदुःखं च प्रशान्तं प्रतिप्रस्रब्धं।

भगवानाह ।

उत्तिष्ठ वज्रभेदकरगन्धेन स्फुटा चेयमह्न ।
सत्वसुखं प्रीतिकरो भेष्यसि वरलोकपिता ॥

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणः पञ्चमं राजपुत्रमभयंनामामन्त्रयते स्म । पेयालं न च केवलमस्मिन् क्लिष्टे बुद्धक्षेत्रे तत्राहं भदन्त भगवन् बोधिमभिसम्बुध्येयं यत्र न नरका भवेयु र्न तिर्य्यग्योनि र्न यमलोकाः । यत्र नीलवैडूर्य्यमयी भूमि र्विस्तरेण यथा पद्मा(मा)यां लोकधातौ बुद्धक्षेत्रे गुणव्यूहा तथा वक्तव्याः । अभयश्च राजपुत्रो रत्नगर्भस्य तथागतस्याग्रतः पद्मं स्थापयित्वाह । यदि मे भदन्त भगवन्नेवंरूपा आशा परिपूर्य्येत तदहं भगवतोऽनुभावेन दर्शनव्यूहं समाधिं प्रतिलभेयं । येनाहं भगवतोऽग्रतो दशसु दिक्षु गङ्गानदीवालिकासमासु लोकधातुषु बुद्धक्षेत्रपरमाणुरजः-संख्यैरपचक्रप्रमाणमात्रैः पद्मैः पुष्पवृष्टिः प्रवर्षेत् यथं च पर्य्येमा सहोदीरिते वाक्ये बुद्धानुभावेन दर्शनव्यूहं समाधिं प्रतिलब्धवान् । दशसु दिक्षु गङ्गानदीवालिकासमेषु लोकधातुषु बुद्धक्षेत्रपरमाणुरजस्समै रथचक्रप्रमाणमात्रैः पद्मैः पद्मवर्षं प्रवर्षितं । यद्दृष्ट्वाऽभयो राजकुमारः परमप्रीतिसौमनस्य-जातो बभूव ।

भगवानाह । अतीव कुलपुत्र शोभनं त्वया प्रणिधानं कृतं शोभनं च बुद्धक्षेत्रं परिगृहीतं । अतिशीघ्रं च ते समाधिः प्रतिलब्धः सत्यवचनेन पद्मवृष्टिः प्रवर्षिता ।

स आह । यदि ममानुत्तरां सम्यक्सम्बोधावाशापरिपूरिर्भवेत् । तदेते पद्मा गगने तिष्ठन्तु । तथैव गगने स्थिता वर्षन्तु ।

भगवानाह । अतिक्षिप्रं कुलपुत्र गगणतलैः पद्मैर्मुद्रितं तेन हि त्वं कुलपुत्र गगणमुद्रो नाम भवस्व भविष्यसि त्वं गगणमुद्रोनामानागतेऽध्वनि अतिक्रान्ते एकगङ्गा-नदीवालिकासमे संख्येयानुप्रविष्टे द्वितीये पूर्व्वदक्षिणस्यां दिशि कोटिशतसहस्रगङ्गानदी-वालिकासमानि बुद्धक्षेत्राण्यतिक्रामयित्वा तत्र पद्मा नाम लोकधातुर्भविष्यति । तत्र त्वं बोधिमभिसम्भोत्स्यसे । पद्मोत्तरश्च नाम तथागतो भविष्यस्यर्हन् सम्यक्सम्बुद्धो विद्या-चरणसम्पन्नो यावद्बुद्धो भगवानप्रमेयेन शुद्धेन बोधिसत्त्वसंघेन । अपरिमाणश्री आयु-र्भविष्यति । सर्व्वैश्च गैर्गुणैः समन्वागतं लप्स्यसि । यदेतत् प्रणिधानं कृतं । गगणमुद्रो बोधिसत्वो रत्नगर्भस्य तथागतस्य पादौ* शिरसा निपपात ।

तद्भगवानाह ।

भविष्यसे जगति हितकरः क्लेशकलुषशमकरः ।
देवरजःसमगुणधरो बोधिं प्राप्स्यसि यथा पूर्व्वजिनैः ॥

---

* पादयोः शिरसा निपपात । एवं पाठो युक्तः ।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणः षष्ठं राजपुत्रसवरं नामामन्त्रयति स्म । पेयालमेव केवलमस्मिन् क्लिष्टे बुद्धक्षेत्रे यावद्यथा गगणमुद्रेण बोधिसत्त्वेन प्रणिधानं कृतं । यदि मे भगवन्नेवंरूपा आशा परिपूर्य्येत तद्दश दिशि गङ्गानदीवालिकासमासु लोकधातुषु सर्व्वगगणेषु सप्तरत्नमयाः छत्राः प्रादुर्भवन्तु हेमजालप्रतिच्छन्नाः सप्तरत्नमयाभिर्घण्टाभिरलङ्कृताः । तत्र छत्रघण्टाजालैरेवंरूपः शब्दो निश्चरेत् यदुत बुद्धशब्दो धर्म्मशब्दः संघशब्दः पारमिताशब्दोऽभिज्ञाशब्दो वैशारद्यशब्दः सर्व्वे चित्ते सत्त्वा एवंरूपं शब्दं शृणुयुः ते श्रुत्वा सर्व्वेऽनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयेयुः । ये चात्र सत्त्वा पूर्व्वमुत्पादित-बोधिचित्तास्तेऽवैवर्त्तिका भवेयुरनुत्तरायां सम्यक्सम्बोधौ । समनन्तरव्याहृतेऽस्मिन् व्याहारे अथ दशसु दिक्षु गङ्गानदीवालिकासमेषु लोकधातुषु सर्व्वगगणतलात् पेयालं एवंरूपाः शब्दा निश्चरन्ति । भगवतश्चानुभावात् स्वयमेवाद्राक्षीत् पुनरेवमाह । स चेन्मे भवन्त भगवन्नेवंरूपा आशा परिपूर्य्येत यथा मे प्रणिधानं कृतं । तदहं भगवतः पुरतो ज्ञानवैरोचनं समाधिं प्रतिलभेय । येन मम कुशला धर्म्मा निवर्त्तेयुः प्रतिलब्धे च समाधौ मां भगवान् व्याकुर्य्यात् । भगवतश्चानुभावेन वैरोचनसमाधिः प्रतिलब्धा* ।

भगवानाह । साधु साधु सत्पुरुष उदारं ते प्रणिधानं कृतं तेन त्वं पुण्याभिष्यन्देन दशसु दिक्षु गङ्गानदीवालिकासमा बुद्धक्षेत्रा सहस्रैकप्रमाणाः शतसहस्रमनोज्ञशब्दसंचोदितो बुद्धक्षेत्रः । ततस्त्वं कुलपुत्र वेगवैरोचनो नाम भवस्व भविष्यसि त्वं वेगवैरोचनोऽतिक्रान्तेऽप्येकनदीगङ्गावालिकासमे संख्येयेऽनुप्रविष्टे द्वितीये पुरस्तिमायां दिशि गङ्गानदीवालिकासमा लोकधातवोऽतिक्रमित्वा आदित्यसोमो नाम लोकधातुः तत्र त्वं बोधिमभिसम्भोत्स्यसे । धर्म्मवशवर्त्तीश्वरराजो नाम तथागतो भविष्यस्यर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नो यावद्बुद्धो भगवान् स च वेगवैरोचनो बोधिसत्त्वस्तं भगवन्तं पद्ममण्डलेन वन्दति रत्नगर्भं तथागतं आह ।

उत्तिष्ठ सम्रत सुरत दान्तचित्त सत्त्वेभ्यः
तीव्रकरुणामहती प्रवृत्ता तारे हि सत्त्वान् ।
दुःखार्णवतीरं संस्था
यावत्त्व बुध्यसि अनुत्तरबुद्धबोधिं ॥

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणः सप्तमं राजपुत्रमङ्गजमामन्त्रयामास । पेयालं । न चास्मिन् क्लिष्टे बुद्धक्षेत्रे तत्राहं बोधिमभिसम्बुद्धेयं । यत्रैव न नरका न तिर्य्यग्योनिः न यमलोकः प्रज्ञायते न मातृग्रामो न च सत्त्वानां गर्भवासः । न सुमेरुः न चक्रवाड़ महाचक्रवाड़ान् पांशुशैलपर्व्वतानोत्सदशर्करकठोऽत्र कण्टकावाहना न काष्ठस्तृणा न महासमुद्रा

---

* प्रतिलब्धः, इति पाठः संगच्छते ।

न च चन्द्रादित्या न तारकरूपा न रात्रिंदिवसा न ते सक्षुब्धा न च तत्र सत्त्वानामुच्चार-
प्रस्रावखेटसिंघानकं। न कायखेददुर्गन्धं न च सत्त्वानां कायक्लमता भवेत्। न चित्त-
क्लमता। न च तत्र पांशुभूमिर्भवेत्। सर्व्वा च तत्र भूमिरश्मगर्भमयी भवेत्। अनेक-
रत्नशतसहस्रालङ्कृता भवेत्। मान्दारवमहामान्दारवपुष्पावकीर्णा च तद्बुद्धक्षेत्रं नाना-
दूष्यालङ्कृतं भवेत्। ते रत्नवृक्षा नानारत्नजालालङ्कृता भवेयुः। नानारत्नदूष्या नानारत्नवस्त्रा
नानारत्नमाला नानारत्नाभरणालङ्कारालङ्कृता नानामाल्येभ्यो नानागन्धैर्नानारत्नभाजने-
र्नानारत्नपुष्पैश्च ते रत्नवृक्षालङ्कृता भवेयुः। न तत्र शशिः प्रज्ञायेत अन्यत्र यदा पुष्पाः
संकुचेयुर्वायसाश्च व्याहरेयुः संकुचितेभ्यश्च पुष्पेभ्यः। बोधिसत्त्वा प्रजानीयुः। समापन्नाश्च
तत्र बोधिसत्त्वा दर्शनव्यूहं नाम समाधिं प्रतिलभेयुः। येन समाधिना प्रतिलब्धेन दशसु
दिक्षु बुद्धक्षेत्रपरमाणुरजःसमानान्येषु लोकधातुषु तिष्ठतो यापयतो बुद्धान् भगवतः
पश्येयुः। तत्क्षणे चैवंरूपं विशुद्धं दिव्यश्रोत्रं प्रतिलभेयुः। येन दशसु दिक्ष्वन्येषु
लोकधातुषु बुद्धक्षेत्रपरमाणुरजःसमेषु बुद्धक्षेत्रेषु बुद्धानां भगवतां धर्म्मदेशनां शृणुयुः।
सद्योपपन्नाश्च सत्त्वाः सर्व्वजातिस्मरा भवेयुस्ते च बुद्धक्षेत्रपरमाणुरजःसमान् कल्पाननुस्मरेयुः।
सद्योपपन्नाश्च ते सत्त्वा सर्व्वे एवंरूपं दिव्यं चक्षुः प्रतिलभेयुः। यत्समं तादृशेषु दिक्षु
बुद्धक्षेत्रपरमाणुरजःसमान् बुद्धक्षेत्रगुणव्यूहान् पश्येयुः सद्योपपन्नाश्च ते सत्त्वाः सर्व्वे एवंरूपेण
परचित्तज्ञानकौशलेन समन्वागता भवेयुः। यदेकक्षणेन बहुबुद्धक्षेत्रपरमाणुरजःसमेषु
बुद्धक्षेत्रेषु सर्व्वसत्त्वानां चित्तचरितं विजानीयुर्यावद्बोधिपरिनिर्व्वाणं ते सत्त्वास्तं समाधिं
प्रणमेयुः। गन्धाः प्रत्यूषकालसमये चतुर्दिशं सुगन्धाः प्रीतिकराश्च मृदुसुखसंस्पर्शा वायवो
वायेयुः। ये तान् पुष्पान् विकासयेयुः। ते च बोधिसत्त्वास्तेभ्यः समाधिभ्यो व्युत्थिहित्वा
तेभ्यः पुष्पकेशरेभ्य उत्तिष्ठेयुः। तथारूपश्च ऋद्धिविषयं प्रतिलभेरन् यदेकचित्तक्षणेन
बुद्धक्षेत्रपरमाणुरजःसमानेकैकां दिशं गच्छेयुः। तिष्ठतो यापयतो बुद्धान् भगवतो वन्दित्वा
पर्य्युपासित्वा तदा निर्व्वर्त्तेयुः। तत्र च मान्दारवमहामान्दारवपुष्पकेशरेषु पर्य्यङ्कमाबद्धा
निषीदेयुः। धर्म्मसुखमनसिकारेण तथागतं प्रेक्षेयुर्येन येन च निषीदेयुः परिवर्त्तेयु-
र्वा सर्व्वदिशासु च मामेव पश्येयुः। यथारूपं च तत्र बोधिसत्त्वानां महासत्त्वानां काङ्क्षा-
विमतिधर्म्मेषु संशय उत्पद्यते। तत्सर्व्वं मम दर्शनावलोकनमात्रेण विगच्छेयुः।
यथारूपां च धर्म्मदेशनां ते बोधिसत्त्वा महासत्त्वा आकाङ्क्षेयुः। तथारूपां धर्म्मदेशनां
मम अवलोकनमात्रेण जानेयुः। अममा अपरिग्रहाश्च तत्र सत्त्वा भवेयुः। अन्ततः
स्वकायजीवितेनाप्यनर्थिकाः सर्व्वे च तत्र बोधिसत्त्वा अवैवर्त्तिका भवेयुः। न तत्राकुशलस्य
नाम भवेन्न च तत्र बुद्धक्षेत्रे शिक्षाप्रत्ययस्य नाम भवेत् न चापत्तिव्युत्थानकथा यावत्
सर्व्वसत्त्वा द्वात्रिंशद्भिर्महापुरुषलक्षणैः समन्वागता भवेयुः सर्व्वे च नारायणबलिका भवेयुः।
न च तत्रैकसत्त्वोऽपीन्द्रियविकलो भवेत्। यावद्बोधिनिर्व्वाणेन सर्व्वे च तत्र सत्त्वा
मुण्डा न च काषायचीवरप्रावृताः प्रव्राजयेयुः। सुविभक्तं च समाधिं प्रतिलभेयुः। यावद्-
बोधिपर्य्यन्तेन प्रणमेयुः। सर्व्वे च तत्र समवधानकुशलमूला भवेयुः। न च तत्र बुद्धक्षेत्रे
सत्त्वानां व्याधिजरादुःखं प्रज्ञायेत। येषां सत्त्वानामायुःपरिक्षयो भवेत्ते सर्व्वे पर्य्यङ्केन

परिनिर्व्वायेयुः । स्वकाच्च शरीरात्तेजोधातुं प्रमुञ्चेयुर्येनात्मनः शरीरं ध्मापयेयुः । चतुर्द्दिशञ्च वायवश्च आगच्छेयुः ये तानि बोधिसत्त्वशरीराणि शून्येषु बुद्धक्षेत्रेषु क्षिपेयुः । एवंरूपाश्च महामणिरत्नाः प्रादुर्भवेयुः । तद्यथा राज्ञश्चक्रवर्त्तिनः प्रभास्वरं मणिरत्नं ये च तत्र सत्त्वास्तां मणिरत्नप्रभां पश्येयुः । तं वा मणिरत्नं पश्येयुः । स्पृशेयुर्वा ते सर्व्वे नरकतिर्य्यग्यमलोकदुःखानि यावद्बोधिनिर्व्वाणेन मा प्रतिसंवेदयेयुः । ते च ततश्च्यवित्वा तत्रोपपद्येयुः । यत्र तिष्ठन्तो यापयन्तो बुद्धा भगवन्तः सत्त्वानां धर्म्मं देशयन्ति । तत्रोपपन्नाश्च ते सत्त्वास्तेषां बुद्धानां भगवतां सकाशाद्धर्म्मं शृणुयुस्ते च बोधिचित्तमुत्पादयेयुः सद्योत्पादिते च बोधिचित्तेऽवैवर्त्तिका भवेयुरनुत्तरायां सम्यक्सम्बोधौ । न कश्चित् सत्त्वो मम बुद्धक्षेत्रेऽसमाहितः कालं कुर्य्यात् न दुःखवेदनाया न परस्परव्यावद्धचित्ता विप्रयोगमरणाय ततश्च मा अक्षणेषूपपद्येयुः । यावद्बोधिपर्य्यन्तं । बुद्धदर्शनेनाविरहिता भवेयुः । धर्म्मश्रवणेन संघोपस्थानेनाविरहिता भवेयुः । सर्व्वे च तत्र सत्त्वा अपगतखिलदोषमदेर्ष्यामात्सर्य्या भवेयुः । विवर्त्तितं च बुद्धक्षेत्रं श्रावकप्रत्येकबुद्धैर्भवेत् । शुद्धैश्च बोधिसत्त्वैस्तं बुद्धक्षेत्रं स्फुटं भवेत् । स्निग्धचित्ता मृदुचित्ता अवैरचित्ता अकिल्बिषचित्ताः शान्तचित्ताः समाहितचित्ताश्च भवेयुः । तत्र ये सत्त्वा उपपद्येयुः । प्रभास्वरं च * मेतद्बुद्धक्षेत्रं भवेत् महद्गुणव्यूहञ्च † मेतद्बुद्धक्षेत्रं दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमैः लोकधातुभिर्दिव्यैश्च गन्धेन च स्फुरेत् नित्यसुखसमर्पिताश्च तत्र सत्त्वा भवेयुः । न च तत्र बुद्धक्षेत्रे दुःखशब्दः श्रूयेत । तावच्चाहं बोधिसत्त्वचर्य्यां चरिष्यामि यावदहं बोधिसत्त्वभूतश्चैवंरूपाभिर्बुद्धक्षेत्रगुणव्यूहसम्पदाभिः बुद्धक्षेत्रं परिशुद्धं स्थापयिष्यामि । एवंरूपैः परिशुद्धाशयैः सत्त्वैस्तद्बुद्धक्षेत्रं स्फुटं स्थापयिष्यामि । ततः पश्चादहं तत्र बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । बोधिप्राप्तस्य च मेऽप्रमाणप्रभा भवेत् सहस्रबुद्धक्षेत्रपरमाणुरजःसमेषु च दशसु दिक्स्वन्येषु बुद्धक्षेत्रेषु लक्षणालङ्कृता मे कायः संदृश्येदिति ‡ । ये च तत्र सत्त्वा मां पश्येयुः । तेषां सत्त्वानां रागः प्रशमयेत् द्वेषो मोहेर्ष्यामानम्रक्षसर्व्वक्लेशोपक्लेशाः प्रशमेयुः । सर्व्वे बोधिचित्तमुत्पादयेयुः । यथाविधाश्च समाधिधारणीराकाङ्क्षेत तथारूपा मां दृष्ट्वा प्रतिलभेयुः । ये च तत्र सत्त्वाः शीतनरके प्रत्याजाता भवेयुस्तेषां मां दृष्ट्वा सुखावेदना प्रादुर्भवेत् तथारूपां च सुखां वेदनां प्रतिलभेरन् यथापि नाम द्वितीयध्यानसमापन्नस्य भिक्षोस्ते च मां दृष्ट्वा कायचैतसिकेन सुखेन समर्पिता भवेयुस्ते च सर्व्वेऽनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयेयुस्ते च तत्र च्यवित्वा मम बुद्धक्षेत्रे उपपद्येरन् न तत्र वा वैवर्त्तिका भवेयुः । अनुत्तरायां सम्यक्सम्बोधौ ये च सत्त्वाः प्रेतभवनेषूपपन्नाः । मम पश्येयुः पेयालं । अवैवर्त्तिका भवेयुरनुत्तरायां सम्यक्सम्बोधौ एवं तिर्य्यग्योनिगता वक्तव्याः । एवं देवाः । द्विगुणा च मे प्रभा भवेयं । अप्रमाणं च मे आयुर्भवेत् । यन्न शक्यं केनचिद्गणयितुं । अन्यत्र सर्व्वज्ञज्ञाने

---

* चैतद्बुद्धक्षेत्रमिति साधुः ।

† यद्यपि चैतद्बुद्धक्षेत्रमिति भवितुमर्हति ।

‡ संदृश्येदिति पाठः साधीयान् ।

न बोधिप्राप्तस्य च मे दशसु दिक्ष्वप्रमेयेष्वपरिमाणेष्वन्येषु लोकधातुषु बुद्धा भगवन्तो मम वर्णं भाषेरन् येषामनुश्रावयेयम् । ये च तत्र सत्त्वा मम वर्णं शृणुयुः । ते तत्र मम बुद्धक्षेत्रे कुशलमूलं परिणामयेयुः । ते कालं कृत्वा मम बुद्धक्षेत्रे उपपद्येयुः स्थापयित्वाऽनन्तर्य्य-कारकान् सद्धर्म्मप्रतिक्षेप(कान्)तां आर्य्यापवादकान् बोधिप्राप्तस्य च मे ये सत्त्वा अप्रमेयेष्व-संख्येयेषु लोकधातुषु मम नामधेयं शृणुयुः । मम च बुद्धक्षेत्रे उपपत्तिमाकाङ्क्षेयुः । तेषामहं मरणकालसमयेऽनेकगणपरिवृतो वितिमिरसमाधिं समापन्नो । तथारूपेण शुभाषितेन तान् सत्त्वान् सन्तोषयेयं तेषां सत्त्वानां सर्व्वदुःखं प्रशमेत्तेनैव प्रसादेन निश्रितां समाधिं प्रतिलभेयुः । चित्तस्पृहणं धर्म्मक्षान्तिं प्रतिलभेयुः कालं च कृत्वा मम बुद्धक्षेत्रं उपपद्येयुः । ये च पुनरन्यत्र बुद्धक्षेत्रेषु श्रमणयानैरर्थिताः सत्त्वा अनर्थिकाः त्रिभिर्यानैरनर्थिका देव-मानुषिकाभिः सम्पत्तिभिरनर्थिकाः कुशलपर्य्येष्टिभिः पुण्यक्रियावस्तुभिः अधर्म्मराग-रक्ताविषमलोभाभिभूता मिथ्या-धर्म्मपरीतास्तेषां प्रभासमाधिना मरणकालसमये पुरत-स्थिष्ठेयं । अनेकगणपरिवृतो धर्म्मं देशयेयं । तेषां स्वकं बुद्धक्षेत्रं दर्शयेयं । बोधौ च समादापयेयं । ते सत्त्वा ममान्तिके परमप्रीतिप्रसादं प्रामोद्यं प्रतिलभेयुः । बोधौ च चित्तान्युत्पादयेयुः । तेषां सर्व्वदुःखवेदनां प्रशमयेयुः । ते सूर्य्यप्रदीपं च समाधिं प्रति-लभेरन् मोहप्रहाणं येषां भवेत् कालं च कृत्वा मम बुद्धक्षेत्रे उपपद्येयुः ।

भगवानाह । साधु साधु सत्पुरुष शोभनं ते प्रणिधानं कृतं । स आह । यदि मे भदन्त भगवन्नियं सर्व्वा आशा परिपूर्य्यते । तथा च दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमे-ष्वन्येषु बुद्धक्षेत्रेषूरगसारचन्दनवृष्टिं प्रवर्षतु । ये च सत्त्वास्तं गन्धं घ्रायेयुः ते सर्व्वे बोधौ चित्तमुत्पादयेयुः । अहं चेतर्हि प्रतीतस्मृतिं नाम समाधिं प्रतिलभेयं । यत् स्वयमेव पश्येयं । उत्पादितश्च कुलपुत्र प्रतीतस्मृतिः समाधिः स्वयमेवाद्राक्षीत् बुद्धक्षेत्रपरमाणुरजः-समेषु दशसु दिक्ष्वेकस्यां दिशि गणनातिक्रान्ताश्च सत्त्वा बोधौ समादापितास्तेन त्वं कुलपुत्र सिंहगन्धो भवस्व । अतिक्रान्ते विंशत्ये एकगङ्गानदीवालिकासंख्येयासु प्रविष्टे द्वितीये उपरि मा यदि शयितो बुद्धक्षेत्रात् द्विचत्वारिंशत् गङ्गानदीवालिकासमेषु बुद्धक्षेत्रपरमाणु-रजःसमानि बुद्धक्षेत्राण्यतिक्रम्य तत्र नील गन्धप्रभासविरजो नाम लोकधातुर्भविष्यति । तत्र त्वं सिंहगन्धोऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे । प्रभासविरजःसुपुष्प गन्धेश्वर-राज नाम तथागतो भविष्यसि । अर्हन् सम्यक्सम्बुद्धो यावद्बुद्धो भगवान् ।

अथ खलु कुलपुत्र सिंहगन्धो बोधिसत्त्वो रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादौ-वन्दितवान् । त(तो) रत्नगर्भस्तथागत आह ।

उत्तिष्ठ सुरनरदेवपूजित
तारय त्वं भव गतिमस्य दुःखितां ।
छित्वा त्वं भव दुःखक्लेशबन्धनां
मेष्यसि नरजिने आर्य्यपुद्गलः ॥

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणोऽग्रमं राजपुत्रमिदं नामामन्त्रयामास । पेयालं तावदहं भगवन् क्लिष्टे बुद्धक्षेत्रे बोधिसत्त्वभूतो बोधिसत्त्वचारिकां चरिष्यामि यावदहं दशसहस्रान् क्लिष्टान् बुद्धक्षेत्रानेवंरूपान् परिशुद्धान् स्थापयिष्यामि यथा नीलगन्धप्रभासविरजं बुद्धक्षेत्रं तथा भविष्यति । एवंरूपैरवरुप्तकुशलमूलैः परिशुद्धाशयैर्महायानसंप्रस्थितैर्बोधिसत्त्वैस्तद्बुद्धक्षेत्रं स्फुटं स्थापयिष्यामि । पश्चादहमनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यामि तथारूपामहं भदन्त भगवन् बोधिसत्त्वचारिकां चरिष्यामि यथा नान्ये बोधिसत्त्वाश्चरन्ति । यदहं भदन्त भगवन्निमानि समग्राणि बुद्धगुणबोधिसत्त्वगुणपरिशुद्धिः । बुद्धक्षेत्रगुणपरिशुद्धिः रहोगतो एकाकी संचिन्तयमानो निषण्णः । दर्शनशूरसमाधिपूर्व्वङ्गमेन एकादश बोधिसत्त्वसमाधिसहस्राणि यानि मयात्रोत्पादितानि प्रतिलब्धानि भावितानि । यथा मम भदन्त भगवन् बोधिसत्त्वभूतस्य बोधिसत्त्वचारिका येऽपि ते दशसु दिक्ष्वनन्ता पर्यन्तास्वन्यासु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति यापयन्ति सत्त्वानां हिताय सुखाय धर्मं देशयन्ति । ये अध्वसमतिक्रान्ता ध्वजाग्रकेयूरा बुद्धक्षेत्रास्तां परिपूर्णां जिनैः पश्येयम् । प्रावर्त्तयेयम् । तेन च समाधिनाहं भदन्त भगवन् परमाणुरजःसमान् बुद्धान् भगवतो बोधिसत्त्वा श्रावकगणपरिवृतान् पश्येयम् । एकैकस्याहमनिश्रितः समाधिबलेन बुद्धक्षेत्रपरमाणुरजःसमैः कायैः वेदयेयम् एकैकेनवाहं कायेनानुत्तरैर्विविचित्रैरत्नैः पुष्पैरनुत्तरैर्विचित्रैर्माल्यैश्च चूर्णविलेपनैर्वाद्यैः सर्व्वाभिश्चानुत्तराभिर्व्यूहाभिरेकैकं पूजयेयम् । एकक्षणेनवाहं समुद्रबालिकाप्रमाणं कल्पानरेयं यदावाहं सर्व्वकायविभावनेन समाधिनैकक्षयेनैकस्य बुद्धस्य बुद्धक्षेत्रपरमाणुरजःसमान् बुद्धान् पिराध्याजानेयं । गुणाकरसमाधिनावाहं भदन्त भगवन्नेकैकस्य बुद्धक्षेत्र-परमाणुरजःसमैरनुत्तरैस्तवैस्तवेयम् । अनिमिषसमाधिनावाहं भदन्त भगवन् नरकेष्ववतरित्वा नैरयिकमात्मभावमभिनिर्मिणित्वा नैरयिकानां सत्त्वानां धर्मं देशयेयम् । बोधाय च समादापयेयम् । ततस्तान् बोधाय चित्तमुत्पादयेयम् । ततश्चावित्वा मनुष्याणां सहभाव्यतायामुपपद्येयुः । यत्र बुद्धा भगवन्तस्तिष्ठन्ति तेषां बुद्धानां भगवतां सकाशाद्धर्मं शृणुयुः । अवैवर्त्तिकभूमौ च प्रतिष्ठापयेयम् । एवं तिर्यक्षु एवं प्रेतेषु । एवं यक्षेषु । एवं राक्षसेषु । एवमसुरेषु । एवं नागेषु । एवं किन्नरेषु महोरगेषु । एवं पिशाचपूतनकटपूतनेषु । एवं मनुष्य-चण्डालेषु । एवं वणिकेषु गणिकासु । यथा रूपेषु च भगवन् यथा कुलेषूपपद्यन्ते । यथारूपश्च तेषामात्मभावप्रतिलाभः । यथा रूपेण च सत्त्वाः कर्म्मप्रत्ययेन सुखां वेदनां दुःखां वा प्रति संवेदयन्ति । यथा रूपेषु च शिल्पस्थानकर्म्मस्थानेषु प्रसक्ताः । तथारूपमात्मभावं निर्मिणित्वा तथा रूपशिल्पस्थानेषूद्योगं निदर्शयेयम् । तथा रूपेण वासरव्याहारेण सत्त्वानां चित्तमाराधयेयम् । अनुत्तरायां सम्यक्सम्बोधौ समादापयेयम् । निवेशयेयम् प्रतिष्ठापयेयम् अवैवर्त्तिकांश्च स्थापयेयम् । अनुत्तरायां सम्यक्सम्बोधौ तावदहं भदन्त भगवन् बोधिसत्त्वचारिकां चरिष्यामि यथा दशसु सर्व्वबुद्धक्षेत्रसहस्रेषु सर्व्वेषां सत्त्वानां चित्तसन्ततिं तथा परिशोधयेयम् । यथा पूर्व्वकर्म्मक्लेशान् कुर्युः । यदेकसत्त्वस्यापि चत्वारो मारास्त्वित्तसन्ततिपथं न प्रजानीयुः । तदहं दशबुद्धक्षेत्रसहस्राण्येवं रूपां परिशुद्धां स्थापयेयम् । यथा प्रभासविरजावशुकूपगन्धेश्वरराजज्योतिस्सपागतस्य नीले गन्ध-

प्रभासविरजे बुद्धक्षेत्रगुणव्यूहास्तथा भवेयम् । यश्च मया स्वबुद्धक्षेत्रस्य स्वपर्षो या च यथा सिंहगन्धेन बोधिसत्त्वेन प्रणिधानं कृतं । यदि मे भदन्त भगवन्नेवंरूपा आशा परिपूर्य्येत । तथा दशसु बुद्धक्षेत्रसहस्रेषु सत्त्वानां सर्व्वदुःखानि प्रशाम्यन्तु । सर्व्वे च मृदुचित्ता भवन्तु । कर्म्मण्यचित्ता भवन्तु । स्वकस्वककायाबुद्धीपिकायाः तिष्ठन्तो बुद्धान् पश्यन्तु । तेषां च सत्त्वानां विचित्ररत्ना विचित्रपुष्पगन्धविलेपनचूर्णा छत्र-ध्वज-पताकाः प्रादुर्भवन्तु । येन ते सत्त्वा तान् बुद्धान् पूजयेयुः अनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादयेयुः । अहं च भगवन् दर्शनव्यूहसमाधानबलेन स्वयं पश्येयं । यथोदीरितया वाचाभिन्नैवमेव स्वयं पश्यसि, यथा प्रणिधानं कृतमिति ।

भगवानाह । साधु साधु कुलपुत्र यस्त्वं कुलपुत्र समन्तके च बुद्धक्षेत्रसहस्रबुद्धक्षेत्रसहस्राणि परिशुद्धानि स्थापयिष्यसि । अप्रमेयासंख्येयानां च सत्त्वानां चित्तं परिशोधयिष्यसि । एवमप्रमेयासंख्येयानां बुद्धानां भगवतामप्रमेयासंख्येयायां पूजायामौत्सुक्यमापत्स्यसे तेन त्वं कुलपुत्र समन्तभद्रो नाम भवस्व । भविष्यसि त्वं समन्तभद्रो नाम तेऽध्वनि अतिक्रान्ते एकनदी बालिकासमेऽसंख्येये परिवर्त्तविशिष्टे द्वितीय उत्तरायां दिशितो बुद्धक्षेत्रात् षष्टिगङ्गानदीबालिकासमानि बुद्धक्षेत्राण्यतिक्रमित्वा तत्र स्थानतो ये सुविशुद्धगुणो नाम लोकधातुर्भविष्यति । तत्र त्वं समन्तभद्रोऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे । ज्ञानवज्रविक्रमितेश्वरकेतुर्नाम भविष्यसि । तथागतोऽर्हन् सम्यक्सम्बुद्धो भगवान् ।

अथ खलु कुलपुत्र समन्तभद्रो बोधिसत्त्वो महासत्त्वो रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादयोः शिरसा निपपात । रत्नगर्भस्तथागतस्त्वाह ।

उत्तिष्ठ सुरत सुमत दान्तचित्त
सत्त्वान् सन्तति विशोध्य दृढ़प्रतिज्ञ त्वम् ।
सत्त्वान् तारय क्लेशनदीसुघोराम्
त्वं त्राण-उत्काधर भेष्यसि बुद्धलोके ॥

तेन खलु पुनः कुलपुत्र समयेन दशकुमारप्रमुखसहस्राणि एक कण्ठेन सार्थं च भाषिरे भविष्याम वयं भदन्त भगवन्नमः परिशुद्धेषु बुद्धक्षेत्रेषु तथागता अर्हन्तः सम्यक्सम्बुद्धाः यो सुविशुद्धाशयाः समन्तभद्रो बोधिसत्त्वो बोधिसत्त्वचारिकां चरमाणः परिशुद्धां स्थापयति । एवं च वयं षट्परिमिताः परिपूरयित्वा तत्र बुद्धक्षेत्र उपपद्येम । एवं कुलपुत्र रत्नगर्भेण तथागतेन दशप्राणिसहस्रा व्याकृताः । यदा समन्तभद्रोऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते तदा यूयं तेषु सामन्तकेषु लोकधातुष्वनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यध्वे । सहस्रैकनामकास्तथागता भविष्यथ । यदुत सहस्रे ज्वालकुम्भेश्वरघोषो नाम भविष्यथ तथागताः । अपरं सहस्रं संकुसुमेश्वरघोषो नामानो भविष्यन्ति । अपरं सहस्रं सुविमलघोषेश्वरराजनामा भविष्यति तथागतः । अपरं सहस्रं प्रदीपाभयघोषे-

श्वरराजनामा भविष्यति। तथागताः अपरं सहस्रं विमलघोषतेजेश्वरराजनामा भविष्यन्ति। पञ्चशता एकं नामधेया यदुत सूर्य्यघोषनामा भविष्यति। तथा द्वौ विगतभयकीर्त्तिराजा विगतरश्मिश्च विगतरश्मिघोषकीर्त्तीश्वरघोषश्च विपरमधर्म्मकीर्त्तिघोषश्च गर्भकीर्त्तिराजरत्नध्वजः। ज्योतीश्वरः। उत्तममुनिज्ञानेश्वरः चेतचीवरसंस्तराजा। अचिन्त्यमतिज्ञानगर्भः। ज्ञानमेरुध्वजः। ज्ञानसागरराजा महावीर्य्यघोषेश्वरः। मेरुश्रीकल्पः। ज्ञानविरजवेगः। क्रिमीश्वरवीजः। ज्ञानमुषिते गर्ज्जितेश्वरः। अभिभूतगुणसागरराजा। ज्ञानसम्भवबलराजा विरजश्रीरेश्वरराजा। सुनिश्रीकूटवेगपंकुसुमः श्रीकूटज्ञानबुद्धिः वज्रसिंहः। शीलप्रभास्वरः। भद्रोत्तमः। अनन्तरश्मिः। सिंहनन्दिः। अक्षयज्ञानकूटः रत्नावभासः। ज्ञानविमलेः। ज्ञानप्रवातः। सिंहकीर्त्तिः। अभिज्ञागुणराजः। धर्म्मसूमनावर्षी प्रभाकरः। अभ्युद्गतमेरु। धर्म्मसमुद्गतराजविमलेः। गन्धेश्वरः। विमलनेत्रः। महाप्रसन्दयः। असङ्गबलराजा। अस्थानगुणबलः। ज्ञानचीवरः। यशकीर्त्ती। असंगहितैषी। ज्ञानसम्भवः। महामेरुः। जलगर्भः। गुणाकरः। लताकुसुमध्वजः। गणप्रभासः। विशुद्धमोहराजा। यज्ञोत्तमः। धर्म्मकेतुः। घोषेन्द्रराजा। अगुप्तः। वज्रध्वजः। रत्नेश्वरः। अत्युद्गतध्वजेन शैलकल्पः। रतिमेघः। धर्म्मकारिपालराजा। समन्तगुप्तसागरराजा। ज्ञानसंलिखः। ज्ञानार्च्चिकुसुममणिः। गजेन्द्रेश्वरः। उदुम्बरपुष्पः। काञ्चनध्वजः। धर्म्मध्वजः। विनर्द्दितराजः। चन्दनः। सुप्रतिष्ठितस्थामविक्रमः। ध्वजाग्रप्रदीपः। ज्ञानक्रमः। सागरध्वजः व्ययधर्म्मकीर्त्तिः। मानविमर्द्दितः। गुणार्च्चिः। ज्ञानप्रभ.। ज्ञानप्रदीपः। क्षेमराजा। ज्ञानघोषः। ध्वजसंग्रहः। वज्रप्रदीपः। व्यूहराजा। जयसंख्या। सुप्रतिष्ठितः। मणिचन्द्रराजा। क्रमविनर्द्दितराजा। कालेन्द्रसिंहविग्रहः। नारायणविजितगर्भः। रत्नगुणसंनिचयः। ज्योतिगर्भः। नक्षत्रविभवकीर्त्तिः। पुण्यबलपालराजा। ज्ञानघोषः। ब्रह्मोत्तरः। छत्राङ्गः। अपरं सहस्रं गन्धपद्मविजितकीर्त्तिराजा नामानो भविष्यन्ति। रश्मिमण्डलज्योतिप्रभासराजा गन्धपद्मोत्तरवेगः। अनन्तगुणसागरज्ञानोत्तरोत्तरः। जम्बूच्छायः। गुणशैलध्वजः। सिंहकेतुः। नागविक्रीडितकुसुमतेजराजा। सुगन्धवीजनैरात्म्य अक्षतगुणतेजराजकल्पिनेमि भविष्यति। अपरं सहस्रं विशुद्धराजधर्म्मराजानो नामेन्द्रविमुक्तिपुष्पलोकसागरलोचनशैलनामा भविष्यति तथागता अर्हन्तः सम्यक्सम्बुद्धाः। एककाले एकदिवसेऽनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यन्ति। अन्यान्यासु लोकधातुषु दशान्तरकल्पायुःप्रमाणं भविष्यति। तेऽपि दशप्राणसहस्रा रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादौ शिरसा निपेतुः। रत्नगर्भस्तथागत आह॥

उत्तिष्ठत च दृढनागनर्द्दित
क्रियता शुभद्रव्यसञ्चयम्।
उद्युजित पारमितासु वेगता
भविष्यथासुरनरलोकनायकाः॥

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणो नवमं राजपुत्रमामन्त्रयते स्म । अमिघं नाम पेयालं । स आह । तथाहमहं बोधिसत्त्वचारिकां चरिष्यामि यथा मे दशसु दिक्षु गङ्गानदीवालिकासमास्तिष्ठन्तो यापयन्तः बुद्धा भगवन्तो बोधिचारिकां चरतः । साक्षिभूता भविष्यन्ति बोधिसत्त्वचर्य्यायां । यदहं भदन्त भगवन् तत्पुरतो बोधाय चित्तमुत्पादयामि । यावच्चानुत्तरां सम्यक्सम्बोधिमभिसम्बोत्स्ये । अत्रान्तरेण मे बोधिसत्त्वचर्य्यां चरमाणस्य न विप्रतिसारचित्तमुत्पद्येत यावद्बोधिपर्य्यन्तमुपादाय दृढप्रतिज्ञो भवेयं यथावादी तथाकारी न चान्यस्य सत्त्वस्य चित्तं संक्षोभयेयम् । न च मे श्रावकप्रत्येकबुद्धयाने चित्तमुत्पद्येत । मा च कामरागचित्तनैसर्गिका उत्पद्येरन् । मा स्त्यानमिद्धसहगता मा औत्सुक्यसहगता मा कौकृत्यसहगता न विचिकित्सासहगता न प्राणातिपातं नादत्तादानं नाब्रह्मचर्य्यं न मृषावादं न पैशुन्यपारुष्यं नाभिध्यां न व्यापादं न मिथ्यादृष्टिः । न संभिन्नप्रलापं मातृवर्ण्यसन्त्रासं न धर्मगौरवचित्तता न विसंवादनचित्तता यावद्बोधिपर्य्यन्तान्मम बोधिसत्त्वचर्य्यां चरमाणस्य इमे धर्माः संविद्येयुः । यावद्बोधिपर्य्यन्तमुपादाय परकीतिशारकमपि बुद्धानुस्मृतिनित्यं चित्तचैतसिकाः प्रवर्त्तेरन् । यावद्बोधिपर्य्यन्तेन नाहं बुद्धदर्शनेन विरहितो भवेयं न धर्मश्रवणेन न संघोपस्थानेन । सर्वत्र च जातिषु प्रव्रज्यां प्रतिलभेयं सर्वासु जातिषु पांशुकूलिको भवेयं । त्रैचीवरिकः वृक्षमूलिकः । नैरपिकः । आरण्यकः पिण्डपातिकः । अल्पेच्छुः सन्तुष्टः धर्मदेशकः । आदेयवाक्यः अपरिमाणप्रतिमानससंपन्नो भवेयं । न च मूलोत्पत्तिमापद्येयं न मृषावादसहगतैर्मन्त्रैः परप्रश्नविनोऽवमर्द्दयं । शून्यताप्रतिसंयुक्तश्च मातृग्रामस्य धर्मं देशयेयम् । शून्यता मनस्कारेण च मातृग्रामस्य हस्तविदर्शनं कुर्य्यात् । न हस्तविकारेण धर्मं देशयेयम् । नित्यं चाहं महायानसंप्रस्थितानां बोधिसत्त्वानां शास्तृसंज्ञामुत्पादयेयम् । यस्य चाहं धर्मभाणकस्य सकाशाद्धर्मं शृणुयां शास्तृसंज्ञां तस्यान्तिके उत्पादयेयम् । सत्कृत्य चाहं तं धर्मभाणकं यथा तथागतं तथा सत्कुर्य्यां गुरुकुर्य्यां मानयेयम् पूजयेयम् यावदात्ममोचेरपि धर्मभाणकमुपस्थिदेयं । न चाहं धर्मपात्रं चार्विद्य दानं दद्यां न मम धर्मलाभमात्सर्यिका चित्तचैतसिका उत्पद्येयुः । स्वजीवितत्यागेनाहं बोध्यर्थिकान् सत्त्वान् परित्रायेयम् स्वशौर्य्यबलप्रणिधानोपार्जितेन चाहं द्रव्येण व्यसनगतान् सत्त्वान् व्यसनेभ्यः परिमोचयेयं । मया चाहं प्रव्रजितलिङ्गं वा गृहस्थलिङ्गं वा आपत्तिनापत्त्यातात्मोऽस्येयम् नित्यं चाहं लोभसत्कारश्लोकेष्वप्रियपशास्तृसंज्ञामुत्पादयेयम् । यदि च मे भदन्त भगवन्निमे प्रणिधाना यावद्बोधिपर्य्यन्तमुपादाय संवर्ध्येयुः । यथा भगवतः पुरतः प्रणिधानं कृतं तदुभाभ्यां पाणिभ्यां दिव्याश्चक्राः प्रादुर्भवन्तु । सहस्राराः सनाभिकाः स नैमिकाः आदित्यवर्णाः प्रभास्वराः । सह भाषितमात्रायां वाचि अस्मिं येन राजपुत्रेणोभाभ्यां पाणिभ्यां तथारूपाणि चक्राणि प्रादुर्भूतानि । यथा याचिताः पुनराह यदि मे भदन्त भगवन्संकल्पा आशा परिपूर्य्यते । यावद्बोधिपर्य्यन्तेन तदिमे चक्राः शून्ये पञ्चकषायेषु बुद्धक्षेत्रेषु गच्छन्तु । एवंरूपेण च शब्देन यथा नन्दोपनन्दौ नागराजा गच्छन्ति । तथा सर्वावन्तं बुद्धक्षेत्रं स्वरेण विज्ञापयन्तु । बोधिसत्त्वव्याकरणमृत्वसंप्रमोषस्थानदर्शनशून्यता भावना प्रबुद्धविषयधर्मपर्य्यायं धारयितुं । येन

तत्र सत्त्वा उपपन्नास्तेषां सर्व्वेषां श्रोत्रेन्द्रियेष्वयं धर्म्मपर्य्याय आभासमागच्छन्तु । निपतितमात्रे च तेषां सत्त्वानां रागः प्रशमतु । द्वेषो मोहो मानेर्षा मात्सर्य्यं प्रशमतु । सर्व्वबुद्धानुस्मृतिमनसिकारेणानुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयन्तु । प्रेषितौ च कुलपुत्रा सिद्धेन राजपुत्रेण तौ द्वौ चक्ररत्नौ तौ चैवंरूपेण जवेन गच्छतस्तद्यथा बुद्धा भगवन्तो बुद्धजवेन गच्छन्ति । एवमेव तौ द्वौ चक्ररत्नौ गच्छत. दशसु दिशास्वप्रमेयेष्वसंख्येयेषु पञ्चकषायेषु बुद्धक्षेत्रेषु गत्वा सत्त्वानां बोधिसत्त्वव्याकरणस्मृत्यसंप्रमोषज्ञानान्तर्गतेन भावेन मधुर बुद्धधर्म्मपर्य्यायं धारयन्ति तेषां च सत्त्वानामयं धर्म्मपर्य्यायः श्रोत्रेन्द्रियस्याभासमागच्छन्ति । तेषां सर्व्वेषां रागो यावन्मात्सर्य्यं चित्तचैतसिकाः प्रशान्ताः सर्व्वे च बुद्धज्ञानविषयमनस्कारेणानुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादितवन्तो मुहूर्त्तमात्रेण च ते चक्राः प्रतिनिवृत्या-सिद्धस्य राजपुत्रस्य पुरतः स्थिताः ॥

अथ खलु कुलपुत्र रत्नगर्भस्तथागतः । अभिसिद्धस्य राजपुत्रस्य साधुकारमदात् साधु साधु कुलपुत्र त्वयातीवशोभनः प्रणिधिः कृत इमे च विख्याधकरणाः शून्येषु पञ्चकषायेषु बुद्धक्षेत्रेषु प्रेषिता बहूनि च प्राणकोटीनियुतशतसहस्राण्यकलुषचित्ता व्यवस्थापिता निर्बोधौ च समादापितानि तेन त्वं कुलपुत्राक्षोभ्या नाम भवस्व । भविष्यसि त्वमक्षोभ्यो लोकस्य परित्रायकः । यत्त्वमक्षोभ्य बुद्धक्षेत्रगुणव्यूहानि यादृशान्याकाङ्क्षसि ।

अक्षोभ्य आह । तादृशमहं भदन्त भगवन् बुद्धक्षेत्रगुणव्यूहमाकाङ्क्षामि यथा सर्व्वस्रोकवर्णा भवेत् । समा पाणितलोपमा दिव्यमणिरत्नव्यवकीर्णा अपगतक्षारकण्टका अपगतशिलाश्मपाषाणपर्व्वता मृदुका काचिलिन्दिकसुखसंस्पर्शा निक्षिप्ते पादतलेऽवनमेदुत्क्षिप्ते पादतले पुनरुन्नमेत् । न चात्र नरकतिर्य्यग्योनियमलोकविषयाः प्रज्ञायेयुः । न च तत्र बुद्धक्षेत्रदुर्गन्धा भाषा भवेयुः । दिव्यातिक्रान्तेन,गन्धेन तद्बुद्धक्षेत्रं स्फुटं भवेद् दिव्यैश्च मान्दारवमहामान्दारवैः पुष्पैस्तद्बुद्धक्षेत्रमाकीर्णं न च तत्र सत्त्वानां जराव्याधिमरणं भवेत् । न च परस्परविहेठा न च सत्त्वानामकालमरणं विप्रतिसारमरणं नासमाहितमरणं । बुद्धानुस्मृतिमनस्कारेण तत्र सत्त्वा भवेयुः ॥ न च दुर्गतिषूपपद्येयुः । न पञ्चकषायेषु शून्येषु बुद्धक्षेत्रेषूपपद्येयुर्यावद्बोधिपरिनिर्व्वाणात् । बुद्धदर्शना विरहिता भवेयुर्धर्म्मश्रवणेन संघोपस्थानेनाविरहिता अल्परागाश्च तत्र सत्त्वा भवेयुरल्पद्वेषा अल्पमोहाः । सर्व्वे च तत्र दशकुशलान् कर्म्मपथान् समादाय वर्त्तेयुः । न च तत्र बुद्धक्षेत्रे सत्त्वानां शिल्पग्रहणं भवेत् । न नामनिमित्तं न च तत्र सत्त्वानां मारावतारं मार्गेत न च तत्र सत्त्वा दुर्वर्णा भवेयुः । न च तत्र सत्त्वा वैमात्रा भवेयुः । यदुतार्य्यो वा दासो वा अममा अपरिग्रहाश्च तत्र सत्त्वा भवेयुः । न च तत्र श्रावकानां बोधिसत्त्वानां वा शुक्लमोक्षणं भवेत् । अन्ततः स्वप्नान्तरगतानामपि सर्व्वे च तत्र सत्त्वा धर्म्मकामा धर्म्मपर्येष्टिपरा भवेयुः । न च तत्र बुद्धक्षेत्रे एकसत्त्वोऽपि विपरीतदृष्टिको भवेत् न चान्यतीर्थिको न च तत्र सत्त्वानां कायक्लमता भवेत् । सर्व्वे च ते तत्र सत्त्वा पञ्चाभिज्ञा भवेयुः । न च तत्र सत्त्वानां तृषा वा बुभुक्षा वा विहेठयेत् यादृशं चाहारमाकाङ्क्षेयुः । तादृशं रत्नभाजनेषु पुरतः प्रादुर्भवेत् । यथा कामावचराणां देवानां नोच्चारप्रस्रावखेटसिंघाणमस्त्राकाये

खरो वा भवेत् न च तत्र शीतं नोष्णं भवेत् सुगन्धं रमणीयं भवेत् मृदुसंस्पर्शाश्च वायवो वायेयुः। ते च तत्र देव-मनुष्याणां गन्धकृत्यं कुर्व्वीरन् यदा काङ्क्षेयुः। यादृशमाकाङ्क्षेयुः। ■ एकः शीतलं वायुमाकाङ्क्षेत् द्वितीय उष्णं अपरे उत्पलगन्धं वायुमाकाङ्क्षेयुः। अपरे उरगसारचन्दनगन्धं वायुं। अपरे कालानुसारिगन्धं। अपरे तगरगन्धं। अपरे अगुरुगन्धं अपरे सर्व्वेण सर्व्वं वायुमाकाङ्क्षेयुः। तेषां यथा चित्तोत्पादेनाचिन्तं तथा संपद्येत्। एवमपगतपञ्चकषाया लोकधातुर्भवेत्। तत्र च सत्त्वानां सप्तरत्नमयाः कूटागारा भवेयुः। तेषु च कूटागारेषु सप्तरत्नमया पर्य्यङ्का स्थिताः मूलिकोपधानैर्मृदुकाच लिन्दिकसंस्पर्शैः प्रादुर्भवेयुर्यत्र मनुष्या विहरेयु। समन्ततश्च कूटागारेषु पुष्करिणीपरिपूर्णाष्टाङ्गोपेतेनोदकेन प्रादुर्भवेत् यत्र ते सत्त्वा उदकेनोदककार्य्यं कुर्य्युः। सुमना तालवृक्षाणां वा वृक्षावलीरलङ्कृता भवेयुः। नानापुष्पैर्नानाफलैर्नानागन्धैर्नानावस्त्रैर्नानाच्छत्रैर्नानामुक्तिकाहारैर्नानाभरणैरेते वृक्षामूलं कृता * भवेयुः। यथारूपा च तत्र सत्त्वा वस्त्राभरणमाकाङ्क्षेयुः ते वा तेभ्यः कल्पवृक्षेभ्यो गृहीत्वा प्रावरेयुः। एवं पुष्पैर्वासनाभरणं गृहीत्वा बध्येयुः। सप्तरत्नमयश्च मे बोधिवृक्षो भवेत्। योजनसहस्रमुच्चत्वेन योजनं स्कन्धपरिणाहेन योजनसहस्रशाखां परिणाहेन। वायुसमीरितश्च ते बोधिवृक्षात् दिव्यातिक्रान्ताः स्निग्धो मनोज्ञः पारमिता ,अभिर्बलेन्द्रियबलबोध्यङ्गशब्दो निश्चरेत्। ये च सत्त्वास्तं शब्दं शृणुयुस्ते विरागचित्ताः स्मृतिं प्रतिलभेयुः। सर्व्वगुणोपेतश्च तत्र बुद्धक्षेत्रे मातृग्रामो भवेत्। तद्यथा तुषित देवनिकायेऽसुराः। न च तत्र मातृग्रामो दुर्गन्धो भवेत् न स्त्रिजिह्वेनेर्षामात्सर्य्यपरिक्षितेन च तेन मनुष्या मातृग्रामेण सार्द्धं मैथुनकार्य्यं समापद्येयुः। यस्य च तत्र पुरुषस्य सरागचित्तमुत्पद्येत। गत्वा मातृग्रामं सरागेण चित्तेन प्रेक्षते मुहूर्त्तेन पुरुषस्य रागः प्रशाम्येत महतोद्वेगेन च प्रक्रमेत्। शुभविरक्तं च समाधिं प्रतिलभेत। तेन च समाधिना मारपाशेभ्यः परिमुच्येयुः। न च भूयो रक्तचित्तमुत्पादयेयुः। यावत् तत्र स्त्रीपुरुषं सरागं निरीक्षेत गुर्व्विणी भवेत्। निरीक्षितमात्रेण चोभयो रागः प्रशमेत् ये गर्भवासेदारकदारिका एवं कायचैतसिकं सुखं प्रतिसंवेदयेयुः। तद्यथा देवास्त्रयस्त्रिंशानां दन्ति प्रमोदति कायचैतसिकं सुखं प्रतिसंवेदनाभि। एवंरूपश्च तत्र बुद्धक्षेत्रे गर्भवासो दारकदारिकाः सप्तरात्रिं दिवसानि सुखं संवेदयेयुः। ताश्च स्त्रिया गर्भिण्यः एवंरूपं सुखं प्रतिसंवेदयेयुः। तद्यथा तृतीयध्यानसमापन्नो भिक्षुः। न च मे सत्त्वा अशुचिना गर्भमलेन क्लिश्येयुः सप्तमे च दिवसे परमसुगन्धेन परमेण च सुखोपधानेन समर्पिताः प्रजायेयुः। न चैव सा स्त्री दुःखां प्रत्यनुभवे उभौ च पुष्करिणीमवतरित्वा स्नात्वा च सा स्त्री एवंरूपां स्मृतिं प्रतिलभेत। तेन च समाधिना मारकर्म्मणः परिमुच्येत। सा तत्र समाहिता भवेत् यच्च पूर्व्वं जन्मनि तथारूपं कर्म्म कृतमुपचितं भवेद्येन च बहुकल्पकोटीस्त्रीभावमनुभवितव्यं। तेन समाधिनाभिनिर्वृत्तेन स्त्रीभावं च सर्व्वेण सर्व्वं परित्यं गच्छेद् यावत् परिनिर्व्वाणं न भूयः स्त्रीभावं प्रतिलभेत् येषां च सत्त्वानां तथारूपं कर्म्म कृतमुपचितं भवेत्

---

* अलङ्कृता इति पाठ. साधुः।

यद्गणनातिक्रान्तान् कल्पान् नित्यगर्भवासेन प्रत्याजायेयुर्दुःखं प्रत्यनुभवितव्यं भवेत्तेन बोधिप्राप्तस्य मे नामधेयं शृणुयुः । प्रसादं च प्रतिलभेयु स्ते ततश्च्यवित्वा मम बुद्धक्षेत्र उपपद्येयुः गर्भवासेन च प्रत्याजायेयुः तत्र सर्व्वेण सर्व्वं तत् कर्म्म परिक्षयं गच्छेयुर्यावद्बोधिपर्य्यन्तेनानभूय स्ते सत्त्वा गर्भवासेन प्रत्याजायेयुर्य सत्त्वा अवरुप्तकुशलमूलास्ते गर्भवासेन प्रत्याजायेयुः । कर्म्मपरिक्षयेन मम बुद्धक्षेत्रे मातृग्रामो वा गर्भवासो वा प्रज्ञायेत । एकान्तसुखसमर्पितास्ते सत्त्वास्तत्र बुद्धक्षेत्रे भवेयुः । सुमना तावद्वृक्षैर्वायुसमीरितैरेवंरूपो रमणीयो निर्घोषो निश्चरेद्दुःखमनित्यमनात्मशून्यशब्दा निश्चरेयुः । तेन च शब्देन तत्र मनुष्या उल्कावतीं नाम समाधिं प्रतिलभेयु स्तेन च समाधिना ते सत्त्वाः शून्यताप्रभाषां गम्भीरां धर्म्मानवबुध्येयुः । न च तत्र बुद्धक्षेत्रे कामोभयसंहितः शब्दो भवेत् । बोधिमूलनिषण्णस्याहं भदन्त भगवन् मुहूर्त्तेनानुत्तरां सम्यक्सम्बोधिं प्राप्नुयां बोधिप्राप्तस्य च मे तत्र बुद्धक्षेत्रे न भूयश्चन्द्रसूर्य्याणां प्रभा प्रज्ञायेत । अन्यत्र कुसुमसंकोचनेन । एवंरूपा चाहं प्रभां प्रमुञ्चेयं येन दिव्येन चक्षुषा अमेयासंख्येयैरन्यैर्बुद्धक्षेत्रैःस्थितो बुद्धान् भगवतः पश्येयं बोधिप्राप्तश्चाहमेवंरूपेण स्वरेण धर्म्मं देशयेयम् येन स्वरेण त्रिसाहस्रमहासाहस्रं बुद्धक्षेत्रमापूरयेयम् । ये च तत्र सत्त्वाः स्युः । ते सर्व्वे बुद्धानुस्मृतिं प्रतिलभेयु स्ते येन येन गच्छेयुः । चंक्रमेयुर्निषीदेयुर्वा परिवर्त्तयुर्वा ते सततसमितं मां पश्येयुर्यथोक्तरूपेषु धर्म्मेषु धर्म्मं संशया भवेयुः तेषां मम दर्शनमात्रेण व्यवलोकनमात्रेण च तेषां संशया विगच्छेयुः । बोधिप्राप्तस्य च मे ये सत्त्वा दशसु दिक्ष्वप्रमेयेष्वसंख्येयेषु बुद्धक्षेत्रेषु श्रावकयानिका वा प्रत्येकबुद्धयानिका वा ऽनुत्तरयानिका वा मम नामं वा वर्णं वा शृणुयुः ते ततश्च्यवित्वा मम बुद्धक्षेत्रे उपपद्येयुः । ते तत्र मम धर्म्मं श्रुत्वा ये श्रावका यानिकास्तेऽष्टविमोक्षध्यायिनोऽर्हन्तो भवेयुः । ये च प्रत्येकबुद्धयानिकाः ते प्रत्येकां बोधिमधिगच्छेयुः । ये च तत्र बोधिसत्त्वा महायानिका स्ते मत्सकाशाद्धर्म्मं श्रुत्वा गम्भीरां समाधिक्षान्तिधारणीं च प्रतिलभेयुः । ते तत्रैवाविवर्त्तिका भवेयुरनुत्तरायां सम्यक्सम्बोधौ अप्रमेयश्च मे श्रावकसंघो भवेद्यानशक्यं केनचिद् गणयितुं । अन्यत्र स्वयं तथागतेन बोधिप्राप्तश्चाहं येन येन गच्छेयं । यत्र यत्र च पादतले पृथिवीं स्पृशेयं तत्र तत्र सहस्रपत्राणि पद्मानि सुवर्णावभासानि प्रादुर्भवेयुः । ते च पद्माः शून्येषु बुद्धक्षेत्रेषु गत्वा मम वर्णशब्दं घोषं निश्चारयेयुः । ते च सत्त्वा मम नाम वर्णं यशश्च श्रुत्वा प्रीतिप्रसादप्रामोद्यमुत्पादयेयुः । ते प्रसादजाता मम बुद्धक्षेत्र उपपत्तिमाकाङ्क्षेयुः । तत्र च तानि कुशलमूलानि परिणामयेयुः । ते ततश्च्यवित्वा मम बुद्धक्षेत्र उपपद्येयुः । अपगतश्रमणमलश्च मे श्रावकसंघो भवेत् । अपगतश्रमणवाक्यापगतश्रमणसाध्या अपगतपर्षा भवेत् धर्म्मगुरुका न परिष्कारगुरुका न लाभसत्कारगुरुका । अनित्यदुःखा नात्मशून्यताभिरता आरब्धवीर्य्या च सापर्षद्भवेद्धर्म्मश्रवणसंघप्राग्भारा ये च तत्राविवर्त्तिका बोधिसत्त्वा भवेयुस्तेऽनागतप्रविष्टाः स्मृतिं प्रतिलभेयु स्ते जातिव्यतिवृत्ता प्रज्ञापारमिताप्रतिसंयुक्तां कथां कथयेयुः । यावद्बोधिपर्य्यन्तेन । ते धर्म्मा न संप्रमोषं गच्छेयुः । यावद्बोधिप्राप्तश्चाहं दशमहाकल्पसहस्राणि तिष्ठेयं परिनिर्वृतस्य मे कल्पसहस्रं सद्धर्म्मास्तिष्ठेत् ।

भगवानाह । साधु साधु सत्पुरुष परिशुद्धं ते बुद्धक्षेत्रं परिगृहीतं । भविष्यसि त्वं महोभ्यानागतेऽध्वनि अतिक्रान्तेप्येकस्मिन् गङ्गानदीवालिकासमे संख्येयेऽनुप्रविष्टे द्वितीये पुरस्तिमायां दिशि अतः षट्क्षिये बुद्धक्षेत्रेऽभिरतिर्नामलोकधातुर्भविष्यति । एवं रूपा गुणव्यूहया संपन्ना यया त्वया प्रणिधानं कृतं । तत्र त्वमनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यसे । त्वमेवाक्षोभ्यो नाम भविष्यसि तथागतो यावद्बुद्धो भगवान् ।

अक्षोभ्य आह । यदि मे भदन्त भगवन्नेवं रूपा आशा परिपूर्य्येत तत्सर्व्वत्र लोकधातुषु सत्त्वा स्कन्धधात्वायतनपरिगृहीता ये च सत्त्वाः सत्त्वसंग्रहेण संगृहीतास्ते सर्व्वे मैत्रचित्ता भवन्त्ववैरचित्तकलुषचित्ता ते एवं रूपं कायसुखं संवेदयेयुः । तद्यथापि नाम इष्टभूमिर्विष्टस्य बोधिसत्त्वस्य पञ्चसमाधिं समापन्नस्य येनाश्रयप्रहाणाविशुद्धिर्भवति । एवंरूपेण सत्त्वाः कायचैतसिकेन सुखेन समर्पिता भवन्तु । यदहं भगवतः पद्ममण्डलेन पादौ वन्देय । तदा सर्व्वा पृथिवी स्वर्णावभासा भवतु । स च कुलपुत्र रत्नगर्भस्य तथागतस्य पद्ममण्डलेन पादौ वन्दति तदा च तस्मिन् समये सर्व्वसत्त्वा एवंरूपेण सुखेन समर्पिता यथाप्रणिधानं कृतं । तदा धरणी सर्व्वा स्वर्णावभासा दृश्यते ।

रत्नगर्भस्तथागत आह ।

उत्तिष्ठ प्रवरमति अक्षोभ्यचक्रसंस्थित
करतलप्रवरचक्रस्थापिता वज्र ।
तृष्णाकरुणचित्ते
भेष्यसि त्वं शुभमति जगति शास्ता ॥

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणो दशमं राजपुत्रं हिमधिं नामामन्त्रयतेस्म । पेयालं हि मयौ राजपुत्र एवं रूपं प्रणिधानमकार्षीत्तद्यथाऽक्षोभ्येन कृतं यदि मे भदन्त भगवन्नेवंरूपाशा परिपूर्य्येत तत्सर्व्वसत्त्वा बुद्धालम्बनमनस्कारं प्रतिलभन्तु सर्व्वेषां योरगसारचन्दनगन्धो इतो प्रादुर्भवतु । ते च सर्व्वे तं गन्धं बुद्धविषयेषु परिणामयन्तु ।

भगवानाह । साधु साधु कुलपुत्र उदारं ते प्रणिधानं कृतं । यत्त्वया सर्व्वसत्त्वा उरगसारचन्दनगन्धा स्थापिता बुद्धमनस्काराश्रयेनोत्पादितः तेन त्वं कुलपुत्र गन्धहस्तिनाम भवस्व । भविष्यसि त्वं गन्धहस्तिऽतिक्रान्तानां नदीगङ्गावालिकासमानामसंख्येयानां । अवशिष्टे द्वितीये नदीगङ्गावालिकासमेऽसंख्येयेऽक्षोभ्य तथागतोऽर्हति सम्यक्सम्बुद्धे परिनिर्वृते सद्धर्म्मे स्तर्हिते सप्तमे दिवसे त्वं गन्धहस्ति तत्र लोकधातावनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यसे । सुवर्णपुष्पोनाम भविष्यसि तथागतोऽर्हन् सम्यक्सम्बुद्धो यावद्बुद्धो भगवान् गन्धहस्तिराह । यदि मे भदन्त भगवन्नेवंरूपा आशापरिपूर्य्येत तद्यदाहं भगवतः पद्ममण्डलेन पादौ वन्देयं तदा सर्व्वस्मिन्नारामे चम्पकपुष्पवर्षं प्रवर्षतु । यदा खलु कुलपुत्र गन्धहस्तिर्बोधिसत्त्वो रत्नगर्भस्य तथागतस्य पद्ममण्डलेन पादौ वन्दति तदा सर्व्वस्मिन्नारामे चम्पकपुष्पवर्षमभिप्रावर्षत् । रत्नगर्भस्तथागत आह ।

साधु साधु सत्पुरुष रत्नकेतुर्नाम भवस्व भविष्यसि त्वं रत्नकेतोऽनागतेऽध्वनि अति-क्रान्ते गङ्गानदीवालिकासमे संख्येयेऽवशिष्टे द्वितीये गङ्गानदीवालिकासमे संख्येये तत्राभिरत्यां लोकधातौ परिनिर्वृते स्वर्णपुष्पे तथागते तस्य च सद्धर्म्मेऽन्तर्हिते त्रयाणामन्तरकल्पानामत्ययेन तद्बुद्धक्षेत्रं जयक्षेमं नाम भविष्यति। तत्र त्वमनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे नागविनर्द्दितेश्वरघोषो नाम भविष्यसि। यावद्बुद्धो भगवान्। एवंरूपं ते बुद्धक्षेत्रं भविष्यति बुद्धक्षेत्रगुणव्यूहेन यथाक्षोभ्यस्य तथागतस्य रत्नकेतुराह। यदि मे भदन्त भगवन्नेवं रूपं आशा परिपूर्य्येत तद्यथाहं भगवतः पादौ वन्देत तथा सर्व्वसत्त्वा एवंरूपां स्मृतिं प्रतिलभेयुः। यथा बोधिसत्त्वा ये महाबोधिं संप्रस्थिता सर्व्वे सत्त्वानामर्थाय करुणायमानाः सम्बोधौ प्रस्थिता न निवर्त्तेयुः। एवमेव कुलपुत्र रत्नकेतुर्बोधिसत्त्वो रत्नगर्भस्य तथागतस्य पादौ वन्दित्वा एवमेव सत्त्वा एवंरूपां स्मृतिं प्रतिलब्धवन्तो यदुत करुणाचित्ताः सर्व्वसत्त्वाः स्थापिताः।

अथ खलु कुलपुत्र रत्नगर्भस्तथागतो रत्नकेतुं बोधिसत्त्वमाह।

उत्तिष्ठ धैर्य्यसुमते परमकृपसत्त्वहेतु
सुदृढ़ कृतप्रतिज्ञा स्थापयसि।
बहुजनविरजचित्ते भेष्यसे
नरवरो प्रवरबुद्धः॥

एवं पेयालं मार्द्दवपूर्व्वङ्गमैः पञ्चभीराजपुत्रशतैरेवंरूपं प्रणिधानं कृतं कृत्वैवंरूपा बुद्धक्षेत्रगुणव्यूहा परिगृहीता यथा गगनमुद्रेण बोधिसत्त्वेन प्रणिधानं कृतं बुद्धक्षेत्रगुण-व्यूहाश्च परिगृहीताः। सर्व्वे च रत्नगर्भेण तथागतेनानुत्तरायां सम्यक्सम्बोधौ व्याकृताः। एव-मेवैककालेऽन्योन्येषु लोकधातुष्वनुत्तरां सम्यक्सम्बोधिं बुध्यिष्यथ। अपरे चत्वारः शता राजपुत्राणां येरेवंरूपं बुद्धक्षेत्रं परिगृहीतं यथा वज्रच्छेदप्रभासेन तेऽपि सर्व्वे रत्नगर्भेण तथागतेन व्याकृता अनुत्तरायां सम्यक्सम्बोधौ। अन्योन्येषु लोकधातुषु। अपरैरेकोन नवतिभीराजपुत्रैरेवंरूपं प्रणिधानं कृतं। एवंरूपं च बुद्धक्षेत्रं परिगृहीतं यथा समन्तभद्रेण सर्व्वैश्चतुरशीतिभीः कोट्टराजसहस्रैः पृथक् पृथग् विशिष्टं प्रणिधानं कृतं पृथक् पृथग् बुद्धक्षेत्रगुणव्यूहाः परिगृहीताः सर्व्वे च रत्नगर्भेण तथागतेन व्याकृता अनुत्तरायां सम्यक्-सम्बोधौ। एवमेव यूयमप्येककालेऽन्योन्येषु लोकधातुषु अनुत्तरां सम्यक्सम्बोधिमभि-सम्भोत्स्यध्वे॥

अथ खलु कुलपुत्र समुद्ररेणोर्ब्राह्मणस्याशीतिपुत्रा रत्नगर्भस्य तथागतस्य भ्रातरः। तेषां ज्येष्ठः समुद्रेश्वरमुनिर्नाम मानवः।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणः समुद्रेश्वरमुनिं मानवमामन्त्रयामास। प्रति-गृहाण त्वं मानव परिशुद्धां बुद्धक्षेत्रगुणव्यूहां समुद्रेश्वरमुनिर्माणव आह। त्वं तावत्तात प्रथमतरं सिंहनादं नदस्व। समुद्ररेणुराह। त्वं तावत् पुत्र प्रणिधानं कुरुष्व पश्चादह

प्रणिधानं करिष्ये । स आह । किं तावत् परिशुद्धं बुद्धक्षेत्रं प्रतिगृह्णाम्युताहोस्विदपरिशुद्धं । अग्रपुरोहित आह । ये महाकरुणासमन्वागता बोधिसत्त्वास्ते क्लिष्टं बुद्धक्षेत्रं परिगृह्णन्ति क्लिष्टाशयां विपरीतदृष्टिकां सत्त्वान् वैनेयान् प्रतिगृह्णन्ति । यथा पुनस्त्वं माणव संजानीषे ।

अथ खलु कुलपुत्र समुद्रेश्वरभुविर्माणवको येन रत्नगर्भस्तथागतस्तेनोपसंक्रामदुपसंक्रम्य रत्नगर्भस्य तथागतस्य पुरतः स्थित्वैवमाह । एवमहं भदन्त भगवन्ननुत्तरां सम्यक् सम्बोधिमाकाङ्क्षामि अशीतिवर्षसाहस्रिकायां प्रजायां प्रवरां बोधिं स्पृशेयं यथैतर्हि भगवान् । सत्त्वा मन्दरागा मन्दद्वेषा मन्दमोहा उद्विग्नाशयाः संसारे भयदोषदर्शिनस्तथा तत्र बुद्धक्षेत्रे सत्त्वा भवेयुः । यत्राहमभिसम्बुध्येयं । ते च ममान्तिके प्रव्रजेयुः । त्रिभिश्च यानैरहं एषां धर्मं देशयेयं । यदि भदन्त भगवन्नेवं मया आशा परिपूर्य्यते तद्व्याकरोतु मां भगवाननुत्तरायां सम्यक्सम्बोधौ रत्नगर्भस्तथागत आह । भविष्यसि त्वं माणवोऽनागतेऽध्वनि । अतिक्रान्ते एकगङ्गानदीवालिकासमे कल्पेऽसङ्ख्येयेऽनुप्रविष्टे द्वितीये गङ्गानदीवालिकासमे कल्पे उत्पत्ते संतोषणे कल्पे चातुर्द्वीपिका वसिष्ठा नाम भविष्यति — इमं बुद्धक्षेत्रं अशीतिवर्षसाहस्रिकायां प्रजायां बोधिमभिसम्प्रत्स्यसि । रत्नकूटो नाम तथागतो भविष्यसि यावद्बुद्धो भगवान् । स आह । यदि मे भदन्त भगवन्नेवं मया आशा परिपूर्य्यते तदिह सर्व्वारामे लोहितमुक्तिः प्रवर्षतु सर्व्ववृक्षेभ्यश्च पञ्चाङ्गिकं तूर्य्यं निश्चरतु । यदा च कुलपुत्र समुद्रेश्वरभुविर्माणवको रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादौ वन्दति सर्व्वत्रारामे लोहितमुक्तिमप्रवर्षं प्रवर्षितं सर्व्ववृक्षेभ्यश्च पञ्चाङ्गिकं तूर्य्यं निश्चरतु । रत्नगर्भस्तथागत आह ।

उत्तिष्ठ श्यामवर अक्षयप्रज्ञकोषा
सत्त्वानुकम्पकहितोपणमैत्रचित्ता ।
अभिप्राय तुभ्य परिपूर्य्यतु शुद्धसत्त्वा
सत्त्वान् अर्थक भेष्यसि बुद्धलोके ॥

द्वितीयस्य ब्राह्मणस्य पुत्रः भम्मश्री नाम स एवं भवति । यथा समुद्रेश्वरभुविः । रत्नगर्भस्तथागत आह । त्वमपि सालवोत्पलसन्तीरणे कल्पेऽस्यां चातुर्द्वीपिकायां लोकधातौ वसिष्ठे बुद्धक्षेत्रे वर्द्धमानाशीतिवर्षसाहस्रिकायां प्रजायां वैरोचनकुसुमो नाम तथागतो भविष्यसि यावद्बुद्धो भगवान् । पेयालं । तृतीयस्त्वाह । द्विवर्षसहस्रस्य ज्योतिगन्धो नाम भविष्यसि । यावद्बुद्धो भगवान् । व्याकरणं पेयालं एवं सुमनस्तथागतः शैलराजा संतृप्तलोचनो ब्रह्मोत्तरो जम्बुच्छायः पूर्णमुत्तरो गजशैलः समुद्रगर्भो नागयशः । शिखी कनकमुनिर्मुनीन्द्रः कौण्डिन्यः सिंहविक्रमो ज्ञानध्वजो दृढव्याप्यपराजितो विक्रमितो जयो द्वितीयो प्रज्ञाप्रभासो महेन्द्रः शान्तप्रभाकरो नन्दो न्यग्रोधराजः कनकलोचनः वशिष्ठः सूर्य्यनन्दिः रत्नशिखी सुनेत्रो ब्रह्मः सुन्दो ब्रह्मर्षभः प्रणादो धर्मचन्द्रः । अर्थदर्शी । यशः नन्दी यशोत्तरः । अभिभूः सुगन्धमधुरः पद्मलोचन. सुनिश्चलः सार्थव्रत सुमनोरथो वरः प्रद्यः कनकध्वजः

मुनेन्द्रो देवशुद्धः शुद्धोदनः सुदर्शनः । विरूढध्वजो विरूपाक्षो ब्रह्मस्वरः श्रीसम्भवः श्रीमा भाविरजोगणिभद्रः मारीचिः शाक्यमुनिर्घोषेश्वरः सत्यसम्भवः श्रेष्ठः सम्भवः पुष्पः सुकुसुमः अक्षोभ्यः सूर्य्यगर्भो रत्नेश्वरो नागदन्तो वज्रप्रभाभासः कीर्त्तिराजा व्याघ्ररश्मिः मनेस्वज्ञान-सम्भवः गन्धस्वरः । सालेन्द्रः नारायणगात्रः ज्योतिर्गर्भः । यस्तु तत्र कुलपुत्र सर्व्वपश्चिमकः पुरोहितपुत्रः विगतभयसन्तापो नाम स रत्नगर्भस्य तथागतस्य पुरतः स्थित्वाह । इमे भदन्त भगवन्नेकोनाशीतिर्माणवकाः सर्व्वे व्याकृता उत्पले सन्तीरणे कल्पे वर्द्धमानद्वयेऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यन्ते । उत्पादयाम्यहं भगवन्ननुत्तरायां सम्यक्सम्बोधौ चित्तं क्षीयमाणे भदन्त भगवन्नुत्पले सन्तीरणे कल्पे सर्व्वपश्चिमकोऽहं वराग्रबोधिं स्पृशेय । यावत्कं तेषामेकोनाशीतीनां बुद्धानामायुःप्रमाणं तावत्कं ममैकस्य बोधिप्राप्तस्य भवेत् । यावत्काश्च तेषां वैनेया भवेयुस्तावत्का ममैकस्य भवेयुः । यथा च ते त्रिभिर्यानैर्धर्म्मं देशयेयुः । यथा च तेषां श्रावकसंघो भवेत् । तावत्को मम बोधिप्राप्तस्य एकश्रावकसङ्घो भवेत् ये च तेषामेकोनाशीतीनां बुद्धानामुत्पन्नानां सत्त्वास्तस्मिन्नुत्पलसन्तीरणे कल्पे मनुष्य-लाभं प्रतिलप्स्यन्ते । क्षीयमाणे कल्पेऽहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः सर्व्वांस्तान् सत्त्वान् त्रिभिर्यानैर्नियतां व्यवस्थापयेयं । यदि मे भदन्त भगवन्नेवं रूपा आशा परिपूर्य्यत तच्छ्राकुरुष्वत्वं भदन्त भगवन्ननुत्तरायां सम्यक् सम्बोधौ ।

अथ खलु कुलपुत्र रत्नगर्भस्तथागतो विगतभयसन्तापस्य साधुकारमदात् साधु साधु सत्पुरुष गगनातिक्रान्तानां सत्त्वानां कारुणिकहितकरणोत्पन्नो भविष्यसि त्वं माणवकानागते-ऽध्वन्यतिक्रान्त एकगङ्गानदीवालिकासमे संख्येयेऽनुप्रविष्टे द्वितीये गङ्गानदीवालिकासमे संख्येये तस्मिन्नुत्पलसन्तीरणे कल्पे क्षीयमाणे सर्व्वपश्चिमे कल्पमनुत्तरां सम्यक् सम्बोधिमभि-सम्भोत्स्यसे । विगतरजःसमुद्गताभ्युद्गतराजानाम तथागतो भविष्यसि यावद्बुद्धो भगवान् । यथा च तेषामेकोनाशीतीनां बुद्धानामर्द्धकल्पमायुर्भविष्यति । सर्वं * तमेवैकस्यां पुरतःकल्पः भविष्यति । यावत् सर्व्वे ते तत्प्रणिधानाः सम्पत्स्यन्ते यथा प्रणिधानं कृतं । स आह । यदि मे भदन्त भगवन्नेवं रूपा आशा परिपूर्य्यते यदाहं भगवतः पञ्चमण्डलेन पादौ वन्दामि तदा सर्व्वस्मिन् बुद्धक्षेत्रे नीलकुसुमाः प्रवर्षन्तु परमसुगन्धा ये च सत्त्वास्तं गन्धमाघ्रायेयुः। तेषां सर्व्वेषां धातवः प्रसन्ना अविरुद्धा भवेयुः । सर्व्वेषां च सर्व्वव्याधयः प्रशाम्येयुः यदा च कुलपुत्र विगतभयसन्तापो माणवो रत्नगर्भस्य पञ्चमण्डलेन पादौ वन्दति तदा तस्मिन् बुद्धक्षेत्रे सर्व्वत्र तस्मिन् बुद्धक्षेत्रे नीलकुसुमवृष्टिः प्रवर्षिता । ये च सत्त्वास्तं गन्धं घ्रातवन्त-स्तेषां सर्व्वे धातवः समा अविरुद्धाः संस्थिताः सर्व्वे तत्र सत्त्वा अरोगा अल्पबाधाश्च संवृत्ताः । रत्नगर्भस्तथागत आह ।

उत्तिष्ठ करुणप्रज्ञ दान्तचित्ता
पूजयिष्यसि बहव लोकनाथान् ।

---

* तमेवैकस्यां पुरतकल्प इति पाठः सम्यग्भवेत् ।

केचिदपि दृढां शठक्लेशबन्धनो-
द्विमोक्ष्यसे शुभवरमन्त्रकोशःति* ॥

अथ खलु समुद्ररेणुर्ब्राह्मणस्तान् शिष्यानामन्त्रयते स्म । उत्पादय भो माणवका अनुत्तरायां सम्यक्सम्बोधौ चित्तं । गृह्णाथ बुद्धक्षेत्रगुणां यादृशानाकाङ्क्षत । कुरुत भगवतः सकाशे प्रणिधानं यादृशमेवाकाङ्क्षथ । तत्र ज्योतिषको नाम माणवः । स आह । कीदृशेन मार्गेण कीदृशेन सम्भारेण कीदृश्या चर्य्यया कीदृश्या स्मृत्या बोधिर्लभ्यते । पुरोहित आह । चत्वार इमे माणवका बोधिमार्गप्रतिपन्नेन बोधिसत्त्वेनाक्षयकोशाः समुदानयितव्याः । कतमे चत्वारः अक्षयपुण्यसम्भारः । अक्षयो ज्ञानसम्भारः । अक्षयः प्रज्ञासम्भारः । अक्षयः सर्व्वधर्म्मसमुदानयनसम्भारः । ईदृशाः कुलपुत्रमार्गाः । उक्तञ्चैतं माणव तथागतेन सम्भारविशुद्धिसङ्घो नाम संसारोत्तरेण धर्म्मद्वारेणसम्भारं बोधिसत्त्वाय परित्यजन्ति । स च वैनेयसत्त्वपरिपाचनाय संवर्त्तते शीलसम्भारो बोधिसत्त्वानां प्रणिधानपूर्य्यै संवर्त्तते । क्षान्तिसम्भारो बोधिसत्त्वानां लक्षणानुव्यञ्जनपरिपूर्य्यै संवर्त्तते । वीर्य्यसम्भारो बोधिसत्त्वानां सर्व्वकार्यकरणाय संवर्त्तते । ध्यानसम्भारो बोधिसत्त्वो नामाज्ञानेयचित्ततायै संवर्त्तते । प्रज्ञासम्भारो बोधिसत्त्वानां सर्व्वक्लेशपरिज्ञायै संवर्त्तते । श्रुतसम्भारो बोधिसत्त्वो नामसङ्गप्रतिभानतायै संवर्त्तते । पुण्यसम्भारो बोधिसत्त्वानां सर्व्वसत्त्वोपजीव्यतायै संवर्त्तते । ज्ञानसम्भारो बोधिसत्त्वो नाम असङ्गज्ञानतायै संवर्त्तते । शमथसम्भारो बोधिसत्त्वानां कर्म्मण्यचित्ततायै संवर्त्तते । विपश्यना सम्भारो बोधिसत्त्वानां विगतकथंकथायै संवर्त्तते । मैत्रीसम्भारो बोधिसत्त्वानामप्रतिहतचित्ततायै संवर्त्तते । करुणासम्भारो बोधिसत्त्वानां वैनेयाखेदतायै संवर्त्तते । मुदितासम्भारो बोधिसत्त्वानां धर्म्मारामरतिरमणतायै संवर्त्तते । उपेक्षासम्भारो बोधिसत्त्वानामनुनयप्रतिघप्रहाणतायै संवर्त्तते । धर्म्मश्रवणसम्भारो बोधिसत्त्वानां निवरणप्रहाणाय संवर्त्तते । नैष्क्रम्यसम्भारो बोधिसत्त्वानां सर्व्वपरिग्रहोत्सर्जनतायै संवर्त्तते । अरण्यवाससम्भारो बोधिसत्त्वानां कृतकुशलमूलकर्म्माविप्रणाशतायै संवर्त्तते । कुशलवृद्धिभावनतासम्भारो बोधिसत्त्वानां सर्व्वकुशलतायै संवर्त्तते । मतिसम्भारो बोधिसत्त्वानां बुद्धिप्रवेशनतायै संवर्त्तते । धृतिसम्भारो बोधिसत्त्वानां अर्थगम्भीरानुबुध्यनतायै संवर्त्तते । स्मृत्युपस्थानसम्भारो बोधिसत्त्वानां कायवेदनाचित्तधर्म्मप्रभावेक्षणतायै संवर्त्तते । सम्यक्प्रहाणसम्भारो बोधिसत्त्वानां सर्व्वकुशलधर्म्मभावनापरिपूरणाय संवर्त्तते । ऋद्धिपादसम्भारो बोधिसत्त्वानां कायचित्तलघुतायै संवर्त्तते । इन्द्रियसम्भारो बोधिसत्त्वानां सम्भारपरिपूर्य्यै संवर्त्तते । बलसम्भारो बोधिसत्त्वानां सर्व्वक्लेशप्रमर्द्दनतायै संवर्त्तते । बोध्यङ्गसम्भारो बोधिसत्त्वानां धर्म्मस्वभावावबोधनतायै संवर्त्तते । षट्पारमितासम्भारो बोधिसत्त्वानां वैनेयसत्त्वपरिशोधनतायै संवर्त्तते । अयं माणवकाः सम्भारविशुद्धिगुणसङ्घो नाम सम्भारोत्तरधर्म्मद्वारं । स आह । ज्ञानसम्भारो भगवता महार्थो महापरिशोधनाय

* अत्र पाठ सन्दिग्ध ।

युक्तः । शीलं स्वर्गोपपत्तये । श्रुतं महाप्रज्ञतायै । श्रद्धाजीवभावना भगवता सम्भारोत्तरणार्थं निर्दिष्टा ॥

पुरोहित आह । ये मानवाः संसाराभिरता दानं ददन्ति । एवमेतद्यथोक्तं । ये माणवक कुलपुत्रा वा कुलदुहितरो वा बोधिमार्गप्रतिपन्नास्तैर्निन्दमचित्ततया दातव्यं । शीलं शमथचित्ततया रक्षितव्यं । श्रुतमकलुषचित्ततया पर्य्येषितव्यं भावना महाकरुणाचित्ततायै भावयितव्या । परिशेषा धर्म्माः प्रज्ञाज्ञानोपायसम्भारसमुदानयतायै पर्य्येष्टव्याः । अयं माणवका बोधिमार्गः । ईदृशेन सम्भारेण बोधिर्लभ्यत इति । ईदृशी भावना । ईदृशी स्मृतिः । ईदृशी माणवका बोधिमार्गचर्य्या अनयत माणवका बोधौ कृत्त्वं । शुद्धो माणवका बोधिमार्ग आशयेन प्रणिधानं कर्त्तव्यं । परिपूर्य्यते प्रसन्नो माणवका बोधिमार्गः । आशयविशुद्धा ऋजुका माणवका बोधिमार्गे अशाठ्यविशुद्धि क्षेमप्रवाहणततया । योगक्षेमा माणवका बोधिमार्गः । अनुत्तरनिर्व्वाणपर्य्यवसानः । कुरुत प्रणिधानं गृह्णत बुद्धक्षेत्रगुणव्यूहं परिशुद्धमपरिशुद्धं वा यथाभिप्रेत ॥

अथ कुलपुत्र ज्योतिरसभको* माणवको रत्नगर्भस्य तथागतस्याग्रतो दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्याह उत्पादयाम्यहं भदन्त भगवन्ननुत्तरायां सम्यक् सम्बोधौ चित्तं । यस्मिन् क्लिष्टे बुद्धक्षेत्रे मन्दरागाणां सत्त्वानां मन्दद्वेषाणां मन्दमोहानां । अवलिप्तालुड़ितचित्तानां अपायपथविवर्ज्जितचित्तानां अवैरचित्तानां । ईर्ष्यामात्सर्य्यचित्तविवर्ज्जितानां मिथ्यादृष्टिपरिवर्ज्जितचित्तानां सम्यग्दृष्टिव्यवस्थितचित्तानां कुशलचित्तानां कुशलपर्य्येष्टिचित्तानां अपायपथविवर्ज्जितचित्तानां । त्रिःस्वर्गमार्गोद्युक्तचित्तानां त्रिभिःपुण्यक्रियावस्तुभिः समुदानीतकुशलमूलानां त्रिषु यानेषु प्रयुक्तचित्तानां अनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । यदि मे भदन्त भगवन् एवंरूपा आशा परिपूर्य्येत तदा मे उभयोः पाण्योर्हस्तिनागाः प्रादुर्भवन्तु । सह प्रव्याहृतं वाक्ये भगवतोऽनुभावेन उभयोः पाण्योर्हस्तिनागाः प्रादुर्भूताः सर्व्वश्वेताः सत्त्वा सुप्रतिष्ठिताः । दृष्ट्वा आह । गच्छत† यूयं गगणतलं सर्व्वावनामिदं बुद्धक्षेत्रमष्टाङ्गोपेतेन वर्षेण परमसुगन्धेन सर्व्वसत्त्वानीत बुद्धक्षेत्रात् प्रबोधयत । येषां सत्त्वानां काये ते ता विन्द निपतेयं वा गन्धमालिप्तेयुस्तेषां पञ्चनीवरणाः प्रहीयन्तु तद्यथा कामच्छन्दनीवरणं प्रहीयतु । व्यापादस्त्यानमिद्ध उद्धतकौकृत्यं विचिकित्सानीवरणं प्रहीनतु । सह प्रव्याहृते वाक्ये नागा उपर्य्यन्तरीक्षे एवंरूपेणाक्रमेण गच्छन्ति । तद्यथापि नाम बलवान् पुरुषः प्रसारितं वाहु‡ सङ्कोचयेत् सङ्कोचितं वाहु§ प्रसारयेत् एवमेव ते हस्तिनागाः कृतकार्य्या यथा पूर्व्वोक्तं विवर्ज्जितथाग्रतः स्थिताः ॥

अथ खलु कुलपुत्र ज्योतिरसभो माणवक परमप्रीतमनाः रत्नगर्भस्तथागत आह ।

---

* अत्र योगक्षेमक इति पाठः सम्भाव्यते ।

† अत्र गच्छत इति पाठः प्रामादिकः परं अत्र गच्छत इति पाठो भवितुमर्हति ।

‡ बाहुं इति पाठ उचारवीशः ।

§ बाहुं इति पाठः शुद्धः ।

भविष्यसि त्वं कुलपुत्रानागतेऽध्वनि अनुप्रविष्टे द्वितीये गङ्गानदीवालिकासमे संख्येये रुतप्रभासे कल्पे रुतसञ्चयं नाम बुद्धक्षेत्रं भविष्यति अस्मिन् चातुर्द्वीपिके रत्नच्छत्राभ्युद्गत-रश्मिर्भविष्यसि । तथागतो यावद्बुद्धो भगवान् । अथ कुलपुत्र ज्योतिसभो बोधिसत्त्वो रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादौ शिरसा निपपात ॥

रत्नगर्भस्तथागत आह ।

उत्तिष्ठ विगतरजा शुद्धसत्त्वा
व्याकृत वज्रसत्त्वकोटीः ।
सा भविष्यसि वरशुद्धमार्गः
बोधये भविष्यसि वरजिनसत्त्वनायकः ॥

पेयालं । अष्टशतो माणवकानां त्रयः कोट्यो माणवकानां यैरस्मिन् बुद्धक्षेत्रेऽनुत्तरायां सम्यक्सम्बोधौ प्रणिधानं कृतं । सर्व्वे च ते रत्नगर्भेण तथागतेन व्याकृताः यावद्विपश्यी शिखी विश्वभुजः पश्चिमा बुद्धा बभूवुः । सर्व्वे माणवका व्याकृताः । तत्र षडङ्गवेदपाठकानां ब्राह्मणानां यस्तेषां ज्येष्ठः गुरुसम्मतो वायुविष्णुर्नाम । स आह । अहं पुनः पञ्चकषाये बुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिं स्पृशेयं । तीव्ररागाणां तीव्रद्वेषाणां तीव्रमोहानां सत्त्वानां धर्म्मं देशयेयम् । ज्योतिपालो नाम माणवकः । स आह । किमर्थमयं समनुपश्यमानोऽयं भो उपाध्याय वायुविष्णुः पञ्चकषाये बुद्धक्षेत्रे प्रणिधास्यति । पुरोहित आह । सकलमहाकरुणासमन्वागतो बोधिसत्त्व पञ्चकषाये बुद्धक्षेत्रं बोधिमनुप्राप्नोति । अनाथानां क्लेशैरपोद्धृतानां दृष्टिव्यसनप्राप्तानां सत्त्वानामर्थंकरो भवति । त्राणं परायणं भवति । जन्मसमुद्राच्च सत्त्वानुत्तारयति सम्यग्दृष्ट्यां च सत्त्वान्प्रतिष्ठापयति निर्व्वाणामृतरसेन सत्त्वान् सन्तर्पयति । इयं बोधिसत्त्वस्य महाकरुणा दृश्यते ये पञ्चकषाये बुद्धक्षेत्रे प्रणिदधन्ति रत्नगर्भस्तथागत आह । भविष्यसि त्वं वायुविष्णो अतिक्रान्तानामेकगङ्गानदीवालिकासमानामसंख्येयानामप्रविष्टे द्वितीये गङ्गानदीवालिकासमे संख्येये पुरस्तिमायां दिशायां बुद्धक्षेत्रपरमाणुरजःसमानि बुद्धक्षेत्राण्यतिक्रमित्वा तत्र कषायध्वजनाम लोकधातुर्भविष्यति । तत्र त्वं सत्पुरुषानुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यसे । शालेन्द्रराजो नाम तथागतो भविष्यसि । यावद्बुद्धो भगवान् । वायुविष्णुराह । यदि मे भदन्त भगवन्नेवंरूपा आशा परिपूर्य्येत पञ्चमण्डलेन पादौ वन्दे । तदा मे भगवांश्चक्रपुष्पलक्षणालङ्कृतावुभौ चरणौ मूर्द्धि स्थापयतु । यदा कुलपुत्र वायुविष्णुः । माणवो भगवतः पादयोः शिरसा निपपात तदा रत्नगर्भस्तथागतः उभौ चरणौ वायुविष्णोर्बोधिसत्त्वस्य मूर्द्धि स्थापयित्वाह ॥

उत्तिष्ठ करुणामय तीक्ष्णप्रज्ञवरा
हि चर्य्यावरबोधिकारणात् ।

न हि अन्यु सत्त्व विद्यतिलेऽपि समुपलभते
त्वयि अपि वङ्कसले बोधिमार्गि व्याकृता॥

अथ खलु कुलपुत्र विश्वगुप्तो नाम माणवको रत्नगर्भस्य तथागतस्य पुरतः सप्तरत्नमयं पीठं स्थापयित्वा शतसहस्रमूल्येन प्रज्ञयनेन प्रज्ञप्य तत्र पीठे सुवर्णपात्रं स्थापयित्वा सप्तरत्न-परिपूर्णसुवर्णमयं भृङ्गारं सप्तरत्नमया यष्ट्या बुद्धप्रमुखे भिक्षुसंघे नियोजितवान्। स आह। भविष्याम्यहं भदन्त भगवन्ननागतेऽध्वन्यतिक्रान्ते एकगङ्गानदीवालिकासमेरुसंख्येयेऽवशिष्टे द्वितीये तस्मिंश्च भद्रकल्पे तथागतोऽर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नो क्षीयमाणे आयुषि उत्पन्ने कलियुगनिमित्ते लोभरागद्वेषमोहमानेर्ष्यामात्सर्य पर्युपस्थितानां सत्त्वानां मिथ्यादृष्ट्युच्छ्रयाणामिजमार्गस्थितानां सत्त्वानामकुशले मूले पर्युत्थितचित्तानां कुशले मूले परिहीणचित्तानां सम्यग्दृष्टिविवर्जितचित्तानां मिथ्याजीवाकुशलचित्तानां परिनिर्वृते कनकमुनौ तथागते सद्धर्मेऽन्तर्हितेऽधोलोकेऽन्धायके विंशतिवर्षसहस्रिकायां प्रजायां। अहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं। तत्र कुलपुत्र विश्वगुप्तस्य ब्राह्मणस्य रत्नगर्भस्तथागत आह। साधु साधु ब्राह्मण महाविद्वान् ज्ञानसमन्वागतः त्वं सत्पुरुषोऽन्यं तेन कलियुगनिमित्ते यावद्विंशतिवर्षसहस्रिकायां प्रजायामन्धे लोकेऽनायके प्रणिधानकृते। तेन त्वं सत्पुरुष विद्गगज्ञकरुणाश्रयो नाम भवत्सु भविष्यसि त्वं विद्गगज्ञकरुणाश्रयो नागतेऽध्वन्यतिक्रान्तानामेकगङ्गानदीवालिकासमानामवशिष्टे [द्वितीये सहायां लोकधातौ अनुप्रविष्टे भद्रके कल्पे विंशतिवर्षसहस्रिकायां प्रजायां काश्यपो नाम तथागतो भविष्यसि। यावद्बुद्धो भगवान्॥

अथ खलु कुलपुत्र विद्गगज्ञकरुणाश्रयो बोधिसत्त्वो रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादौ शिरसा वन्दित्वैकान्तेऽस्थात्, रत्नगर्भं तथागतं पुष्पमाल्यगन्धचूर्णैरवकिरति आभिश्च गाथाभिरभिष्टुवान:* ।

नरवर हितकर रतिकर जनक
स्मितमुख प्रमुदित सुमधुरवचना।
ध्यानज्ञान कुशल हितकर
दशबलधरमवरा ज्ञानध्यान विमोक्ष पारमिता॥

नमोऽस्तु ते सुगतो बहुपर्यचरिते
विकसितवदना अनुत्तराय बोधियव्याकृत।
त्वया बहुबोधिसत्त्वेन युता
वन्दाम ते नरवरा सुगता इति —॥

* अत्र गाथाभिरभिष्टुवान इति पाठो भवितुमर्हति।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणश्चतुर्थं विमलवैश्रायनं माणवकं संचोदयामास । अथ खलु कुलपुत्र विमलवैश्रायनो माणवको रत्नगर्भस्य तथागतस्य पुरतः स्थित्वाह । एवमेवाहमस्मिन् भद्रकल्पे बोधिमाकाङ्क्षामि न च केवलमेवंरूपं कलियुगे यथा काश्यपस्य तथागतस्य परिनिर्वृतस्य दशवर्षसहस्रिकायां प्रजायां दानदमपरिक्षीणाशयानां सत्त्वानां समधनविरहितानामकल्याणमित्रे शास्तृसंज्ञा प्रतिपन्नचित्ता भवन्ति । अनर्थिकास्त्रिभिः पुण्यक्रियावस्तुभिर्भवन्ति विरहितास्त्रिभिः सुचरितैरुद्युक्तास्त्रिषु दुश्चरितेषु । क्लेशान्धकारव्याकुलचित्ता भवन्ति । अनर्थिकास्त्रिभिर्यानैर्न शक्यं तत्कालं केनचिद्बोधिचर्यां निष्पादयितुं किं पुनर्वर्षसहस्रिकायां यावत्ते सत्त्वा वर्षशतायुष्का भवन्ति । तत्कालं सत्त्वानां कुशलमूलस्य नास्ति नाम किं पुनः कुशलमूलचर्या । तावत्पञ्चकषाये लोके हीयमाना दशवर्षायुष्का भवन्ति । शस्त्रान्तरकल्पे प्रत्युपस्थिते तत्कालेऽहं देवेभ्योऽवतीर्य सत्त्वान् परित्रायेयम् । अकुशलं रिचित्वा कुशले नियोजयेयम् । यावद्दशसु कुशलेषु कर्मपथेषु सत्त्वान् प्रतिष्ठापयेयं क्लेशाश्च सत्त्वानां कुशलेभिः परिशोधयेयं पञ्चकषायं च परिहापयेयं । यावदशीतिवर्षसहस्रिकायां प्रजायां । अहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । मन्दरागद्वेषमोहानां अविशेषोमत्सरिणां सत्त्वानां धर्मं देशयेयं त्रिषु च यानेषु संनियोजयेयं । यदि मे भगवन्नेवंरूपा आशा परिपूर्येत व्याकरोतु मां भदन्त भगवन्ननुत्तरायां सम्यक्सम्बोधौ । यद्यहं भदन्त भगवन्नेवंरूपं व्याकरणं नलभ्याभिनवश्रावकभूमिं प्रार्थयामि । न च प्रत्येकबुद्धभूमिं येन यानेन शीघ्रं संसाराद्विमुच्यामि ।

रत्नगर्भस्तथागत आह । चत्वारीमानानुभवन्ति । न च क्षिप्रमनुत्तरां सम्यक्सम्बोधिमनुप्राप्नुवन्ति । कतमानि चत्वारि । इहैकेभ्यो बोधिसत्त्वो हीनाचारो भवति । हीनसहायः । हीनपरित्यागः । हीनप्रणिधिः । कथं च बोधिसत्त्वो हीनाचारो भवति इहैकेभ्यो दुःशीलो भवति । कायवाङ्मनसा चाहं(सं)वृतचारी भवति । श्रावकप्रत्येकबुद्धयानिकैः सार्द्धं संसर्गचारी भवति न च सर्वपरित्यागी न सर्वपरित्यागी भवति । देवमनुष्यश्रीसुखाभिलाषी दानं ददाति । न चाध्याशयेन बुद्धक्षेत्रगुणव्यूहान् प्रतिगृह्णाति वैनेयमनवेक्ष्य प्रणिधानं प्रतिगृह्णाति । एभिश्चतुर्भिर्धर्मैः समन्वागतः कुशीदो बोधिसत्त्वः चिरसंसारचारी दुःखमनुभवति । न च क्षिप्रमनुत्तरां सम्यक्सम्बोधिमनुप्राप्नोति । चतुर्भिर्धर्मैः समन्वागतो बोधिसत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । कतमैश्चतुर्भिः शीलवान् भवति कायवाङ्मनःसंवृतचारी महायानसंप्रस्थितैः सार्द्धं संसर्गचारी भवति सर्वपरित्यागी सर्वस्वपरित्यागी सत्त्वानां दुःखपरिमोचनार्थं करुणाचित्तोत्पादं ददाति । अध्याशयेन बुद्धक्षेत्रगुणव्यूहान् वैनेयमवेक्ष्य प्रणिधानं प्रतिगृह्णाति । एभिश्चतुर्भिर्धर्मैः समन्वागतो बोधिसत्त्वः क्षिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्यते । चत्वार इमे धर्मा बोधिसत्त्वमार्गस्योपस्तम्भकराः कतमे चत्वारः पारमिताश्वभियोगः सत्त्वानां संग्रहः वस्तूत्सर्गः आशयविहाराभिनिष्पादनता । अभिज्ञाविक्रीडनता । चतुर्भिर्धर्मैः बोधिसत्त्वेनात्मविदारिणा भवितव्यं । दानातृप्ततया धर्मश्रवणातृप्ततया भावनातृप्ततया सत्त्वेभ्यः संप्रदर्शनातृप्ततया विहर्तव्यं । चत्वार इमे बोधिसत्त्वेनाक्षया निधयः । परिपूरयितव्याः

कतमे चत्वारः शुद्धा बोधिसत्त्वेनाक्षयो निधिः परिपूरयितव्यः धर्म्मदेशना परिणामना। दरिद्रसत्त्वपरिग्रहणाक्षयो निधिः परिपूरयितव्यः। चतस्र इमा बोधिसत्त्वपरिशुद्धीः कतमाश्चतस्रः नैरात्म्यतया शीलपरिशुद्धिः निःसत्त्वतया समाधिपरिशुद्धिः निर्जीवतया प्रज्ञापरिशुद्धिः। निष्पुद्गलतया विमुक्तिपरिशुद्धिः। विमुक्तिज्ञानदर्शनतया। चत्वारो धर्म्मो बोधिसत्त्वेन परिपूरयितव्या। यैर्बोधिसत्त्वाः चिप्रमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं। आकाशचक्रं प्रवर्त्तयन्ति अनित्यचक्रमतुलचक्रं। अनभिलाप्यचक्रं नैर्याणिकचक्रं नैरधिवयचक्रं। अप्रवर्त्तिचक्रं प्रवर्त्तयन्ति।. भविष्यसि त्वं विमलवैश्रायनानागतेऽध्वन्यतिक्रान्त एकगङ्गानदीवालिकासमे संख्येये चिरप्रविष्टे भद्रकल्पे प्रशान्ते पञ्चकषाये काले वर्द्धमाने आयुषि अशीतिवर्षसहस्रिकायां प्रजायामनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते। मैत्रेयो नाम भविष्यसि तथागतो यावद्बुद्धो भगवान्।

'अथ विमलवैश्रायनो ब्राह्मणो रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादाभिवन्दनं कृत्वैकान्ते स्थित्वा पुष्पमाल्ये चूर्णैर्भगवतः पूजोद्युक्तो गाथाभिरभिष्टौभि* ।

भवनाथ ललाटविशाल
रुचिरोर्णहिमवर्णकनकगिरिकूटसदृशसमनाथ।
करुणेन नयु दृपभा लोकप्रदीपा गुणशतभरिता
कालायत्ये उर्क्क भव हि बुद्धजरो॥

सर्व्वसमुद्ररेणुना ब्राह्मणेन पुरोहितेन सहस्रं वेदपाठकानां बोधौ समादापितं। यथोक्तं कुसन्दः कनकमुनिः काश्यपः मैत्रेयो व्याहृत एवं सिंहः प्रयातः यावद्दिशरं सहस्रं वेदपाठकानां माणवकानां सर्व्वेऽस्मिन् भद्रकल्पेऽनुत्तरायां सम्यक्सम्बोधौ प्रणिधानं कृतवन्तः सर्व्वे रत्नगर्भेण तथागतेनास्मिन्नेव भद्रके कल्पेऽनुत्तरायां सम्यक्सम्बोधौ व्यवस्थापिताः। यत्तेषां सर्व्वकल्पने पुरोहितेन संचोदितः किं भो महायलवैसधारी दीर्घं निरीक्षसे। समादयस्व सत्त्वेषु महाकरुणां। इमाभिश्च गाथाभिर्विज्ञापयति।

ये सत्वा जराव्याधिमृत्युभिर्भया तृष्णा नदी पतिता
प्रचिप्तो भवचारके प्रतिभये स्कन्धे निविष्टा नराः।
पीता क्लेशविषं परस्परवधं दुःखार्णवे संस्थिता
मोहो बन्धमनष्ट मार्गे अशुभ संसारयन्त्रे भ्रमन्॥

दुःखेन ज्वलितभूतसर्व्वत्रिभवेयमिथ्यायदृष्टिस्थिताः
सर्व्वप्राण भ्रमन्ति पञ्चगतिभिश्चक्रं यथा वर्त्तते।

* अत्र गाथाभिरभ्यष्टावीत् इति पाठो युक्तः।

धर्मासिन्धुविहीन पञ्चगतिभिः अत्राण सत्वान् स्मरी
भावे प्रज्ञ जहित्व काङ्क्ष विमतिबोधायछन्दं जने ॥

तृष्णाशोकनुदो भवाहि जगतो सत्वानबन्धुर्भव
क्लेशबन्धनमोचणार्थं जगतो बोधाय चित्तं न मे ।
धर्मचक्रविहीन मोह विगतमार्गे च श्रेष्ठ दद
संसारभवचारकेषु ज्वलिताधर्मारवेण तर्पया ॥

त्वं शीघ्रं उपसंक्रम्य छित्तकरपादानिपत्य मुने
सर्वा भो प्रणिधि प्रशान्तसुटबुद्धो भवं नायकः ।
सत्वा श्वासकरो भवाहि जगतः सत्वार्णवा उद्धरे
मोक्षमार्गप्रणीत इन्द्रियबल बोध्यङ्ग दाता भवेत् ॥
धर्मवर्षमुत्सृज धर्मजलदं सत्वा न दुःखं श्रमेत् ।

स च कुलपुत्र महाबलवेगधारी माणवक आह । नाहं भो उपाध्याय संसाराभिरामी स्थिया काङ्क्षामि । न च पुनः श्रावकप्रत्येकबुद्धयानाभिलाषी । अनुत्तरयानमाकाङ्क्षामि । मुहूर्तं भो उपाध्याय प्रतीक्ष हि शृणुष्व यथाहं सिंहनादं नदामि ।

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणस्ततोऽभिनिष्क्रम्य स्वकां पञ्चब्राह्मणदारकानुपस्थायकानामन्त्र्यैवमाह । भो दारका उत्पादयतानुत्तरायां सम्यक्संबोधौ चित्तं ते आहुः । नास्माकं किञ्चिदस्ति यद्वयं बुद्धप्रमुखस्य भिक्षुसंघस्य निर्यातयामः । वयं च वयमनवस्तकुशलमूला बोधिचित्तं उत्पादयामः ॥

अथ खलु कुलपुत्र समुद्ररेणुर्ब्राह्मणोऽग्रपुरोहितः । प्रथमः करभुजोनामोपस्थायकस्तस्य सप्तरत्नमयं कर्णविभूषणं दत्त्वा द्वितीयः ध्यालभुजोनामोपस्थायकः तस्य द्वितीयं सप्तरत्नमयं कर्णवेष्टकं दत्त्वा । तृतीयः जलभुजोनामोपस्थायकस्तस्य सप्तरत्नमयं पीठं ददाति । चतुर्थश्चार्येगभुजोनामोपस्थायकः तस्य सप्तरत्नमयं छत्रं ददाति पञ्चमः सारभुजोनामोपस्थायकस्तस्य सर्वसौवर्णभृङ्गारं दत्त्वोवाच । गच्छत यूयं माणवका इमानि वस्तूनि बुद्धप्रमुखस्य भिक्षुसंघस्य निर्यातयित्वानुत्तरायां सम्यक्संबोधौ चित्तमुत्पादयथ ।

अथ ते पञ्चोपस्थायका गत्वा भगवत्सकाशं तानि वस्तूनि यथा निक्षिप्तानि बुद्धप्रमुखस्य भिक्षुसंघस्य निर्यातयित्वैवमाहुः । व्याकरोत्वस्माकं भगवाननुत्तरायां सम्यक्सम्बोधौ तस्मिंश्च भद्रके कल्पे वयमनुत्तरां सम्यक्संबोधिमभिसम्बुध्येमहि । येषामं व्याकृतो कुलपुत्र रत्नगर्भेण तथागतेन करभुजो माणवको बोधाय भद्रकल्पे द्रुदम्बरोनाम भविष्यति तथागतः ध्यालभुजस्तदनन्तरे गुणेन्द्रियमतिर्नाम भविष्यति तथागतः । तस्यानन्तरे जलभुजु

सार्थवाहिनोम भविष्यति तथागतः तस्यानुसन्धे वेगभुजः प्रियप्रसन्नो नाम भविष्यति तथागतः तस्यानुसन्धे वसुज्ञो नाम माणवको हरिमन्तचूडो नाम भविष्यति तथागतः । समनन्तरव्याहृतास्ते पञ्चभद्रकल्पिका माणवकाः पुरोहितः पुनरपि बलवेगधारिणमाह । महाबलवेगधारी गृहाणि बुद्धक्षेत्रगुणव्यूहान् करोषि प्रणिधानं भगवतः सकाशाद्यादृश-मानाङ्गुलि निमन्त्रयामि सर्वसत्त्वा धर्मरसेन दृढवीर्येण च त्वकं बोधिचारिकां मा भूयो दीर्घं निरीक्षस्व बाहुना च गृहीत्वा भगवतोऽन्तिकमुपनीतः स च कुलपुत्र महाबलवेगधारी माणवको भगवतः पुरतो निषण्णस्ताह । कियद् बहवो भगवन्ननागतेऽध्वनि मुनिभास्करा अस्मिन् भद्रकल्पे उत्पत्स्यन्ति । रत्नगर्भस्तथागत आह । तस्मिन् माणवक भद्रकल्पे चतुरुत्तरं सहस्रं मुनिभास्कराणामुदयः । माणवक आह । या च तेषां भदन्त भगवन् भद्रके महाकल्पे निर्वृतानां जिनसूर्याणां पश्चिमको रत्नज्ञो नाम माणवकोऽनुत्तरां सम्यक्सम्बोधिमभि-सम्भोत्स्यते । हरिमन्तचूडो नाम भविष्यति । तथागतस्तावच्चिरमहं बोधिसत्त्वचारिकां चरिष्यामि त्रिविधदानपारमितानन्तमसंख्ययुतवीर्यक्षान्तिध्यानप्रज्ञासंभारं समुदा-नयमानः । सर्वेषां च भद्रकल्पिकानामभिसम्बुद्धानां प्रथमं पिण्डपातं दद्यां परि-निर्वृतानां च शरीरपूजां कुर्यां । तेषां च सद्धर्मधारको भवेयं शीलविरहितान् सत्त्वान् शीलसम्पदि समादापयेयं निवेशयेयं प्रतिष्ठापयेयं । दृष्टिविरहितान् सत्कृतप्रमाणान् सत्त्वान् सम्यग्दृष्ट्यां समादापयेयं निवेशयेयं प्रतिष्ठापयेयं । एवमाश्रयविरहितान् सम्यगाश्रये प्रतिष्ठापयेयं । एवमाचारविरहितानाचारे प्रतिष्ठापयेयं नानाविधानां सत्त्वानां कुशलचर्यां निदर्शयेयं तेषां च बुद्धानां भगवतां परिनिर्वृतानां सद्धर्मं पुनरहं सद्धर्मं नेत्रीसद्धर्मपरिषद् सद्धर्मघोषाद् सद्धर्मप्रदीपं लोके ज्वालयेयं । शस्त्रान्तरकालसमये सत्त्वान् प्राणातिपातवैर-मण्यां प्रतिष्ठापयेयं । यावत् सम्यग्दृष्ट्यां दशाकुशलकर्मपथेभ्यः सत्त्वान् कुमार्गाद्धृत्य सम्यक्-पथे स्थापयेयं । दुर्गतितमोऽन्धकारं च नाशयेयं । सुगतिलोकं च निदर्शयेयं । कल्पकषाये पापदुर्वृत्तिक्लेशकषायं च लोके नाशयेयं दुर्भिक्षान्तरकल्पकालसमयेऽहं सत्त्वान् दानपार-मितायां नियोजयेयं । यावत् प्रज्ञापारमितायां समादापयेयं निवेशयेयं षट्पारमितास्वहं सत्त्वान् नियोजयमानः सर्वदुर्भिक्षान्धकारकलिकलुषवैरनिवरविग्रहान् शमयेयं सत्त्वान् शतशो क्लेशानलं शमयेयं । रोगान्तरकल्पकालसमये वाहं सत्त्वान् सत्त्वा षट्पारायणीयेषु समा-दापयेयं । चतुर्षु संग्रहवस्तुषु नियोजयेयं प्रतिष्ठापयेयं रोगान्धकारं च सत्त्वानां विध्वंसयेयं । यावत् सत्त्वानां सततो क्लेशं प्रशमयेयं । सर्वेषां ते बुद्धक्षेत्रे भद्रकल्पे सत्त्वानवरपेक्षामर्षैः परितोषयेयं । यथा चतुरुत्तरं सहस्रं बुद्धा भगवन्तो भद्रके महाकल्पे उत्पन्ना निषण्णाश्च भवेयुः । सर्वत्र सर्वे च सद्धर्मनेत्रो धर्मार्हिता भवेत् । ततः पश्चादहमनुत्तरां सम्यक्-सम्बोधिमभिसम्बुध्येयं ।

यावद् चतुरुत्तरसहस्राणां भद्रकल्पिकानां बुद्धानां भगवतामायुर्भवेत्तावत्कममम बोधिप्राप्तस्य दीर्घमायुर्भवेत् । यावांश्च तेषां श्रावकसंघो भवेत्तावानप्येकस्य श्रावकसंघः स्यात् यावन्तश्च ते कल्पेष्वनुत्तरं बुद्धसहस्रं भगवान् विनयेत्तावन्तः सत्त्वानहं विनयेयं । ये च तेषां बुद्धानां भगवतां श्रावकनिकायाः स्कन्धेषु द्विप्रपन्ने वा प्रपन्नेषु बुद्धानां भगवतां सकाशं-

ऽगौरवचित्ताः प्रदुष्टचित्ता भवेयुः धर्म्मे संघे च स्खलितचित्ता भवेयुः। रागचित्ता आर्य्यापवादाः। आनन्तर्य्यकारकाश्च भवेयुर्बोधिप्राप्तश्चाहं सर्व्वान् संसारपङ्कादुद्धरेयं। अभयपुरे च निर्व्वाणनगरे प्रवेशयेयं। यावन्मम परिनिर्वृतस्य सद्धर्म्मक्षयो न भवेत्तावद्भद्रकमहाकल्पेऽक्षयो भवेयं। निष्ठिते मम सद्धर्म्मनिर्वृते भद्रकल्पे ये मम धातवजन्मशरीराः ते प्रमेया संख्येयास्तथागतविग्रहाः संतिष्ठेरं द्वात्रिंशद्भिर्महापुरुषलक्षणैः समलङ्कृतगात्राः। एकैकं लक्षणमशीतिभिरनुव्यञ्जनैः समलङ्कृतं भवेत्। ते च तथागतविग्रहा दशसु दिक्ष्वप्रमेयेभ्योऽसंख्येयेभ्यः शून्येभ्यो बुद्धक्षेत्रेभ्यो गत्वा एकैको बुद्धविग्रहोऽप्रमेयासंख्येयान् त्रिभिर्यानैः सत्त्वान् समादापयेन्निवेशयेत् प्रतिष्ठापयेद् यत्र बुद्धक्षेत्रेऽन्तरकल्पे न नाशो भवेत्तत्र तथागतविग्रहः सत्त्वान् परित्रायेद्यथा पूर्व्वोक्तं तथा पश्चाच्चिन्तामणिः प्रादुर्भवेद् येषु बुद्धक्षेत्रेषु सत्त्वा रत्नविरहिता भवेयुः। तेषु बुद्धक्षेत्रेषु गत्वा रत्नवृष्टिः प्रवर्षेन्निधयश्च सन्दर्शयेयुः। येषु च बुद्धक्षेत्रेषु सत्त्वाः कुशलक्रियाविरहिता भवेयुः व्याधिभिः क्लिष्टास्तेषु बुद्धक्षेत्रेषु गोशीर्षोरगसारका कलानुसारी गन्धवृष्टिः प्रवर्षेयुः। या च गन्धवृष्टिः सत्त्वानां श्लेष्मव्याधीः दृष्टिव्याधीः कायव्याधींश्च प्रशमयेत्। ततस्ते सत्त्वाः पुण्यक्रियावस्तुष्वभियुक्ता भवेयुः। स्वर्गपरायणा भवेयुः। एवंरूपामहं भदन्त भगवान् बोधिचारिकां चरमाणः सत्त्वान् परित्रायेयं। बोधिप्राप्तश्चाहमेवंरूपं बुद्धकार्य्यं कुर्य्यां परिनिर्वृतश्चाहमेवानन्ता पर्य्यन्तेभ्यो बुद्धक्षेत्रेभ्यः सत्त्वान् परित्रायेयं। यदि मे भदन्त भगवन्नेवंरूपा आशा परिपूर्य्येत न च सत्त्वानां भैषज्यभूतो भवेयं विसंवादिता मे बुद्धा भगवन्तो भवेयुर्ये दशसु दिक्ष्वनन्तापर्य्यन्तेषु लोकधातुषु तिष्ठन्ति यापयन्ति। सत्त्वानां धर्म्मं देशयन्ति या मे भगवन् व्याकुर्य्यादनुत्तरायां सम्यक्सम्बोधौ। येऽपि तेषां प्रतिपन्नानां भगवन् बहुमायाकोट्योऽनुत्तरायां सम्यक्सम्बोधौ व्याकृताः सत्त्वास्तानहं बुद्धान् भगवतो विरोधयेयं। माचाराधयेयं। मा च मे भूयो बोधिहेतोः संसारे सरमाणस्य बुद्धशब्दो धर्म्मशब्दः संघशब्दः कुशलशब्दः कुशलकर्म्मक्रियाशब्दः श्रोत्रपुटेषु निपतेन्नित्यमहमवीचिपर्य्यापन्नो भवेयं। यदि मे भगवन्नेवंरूपा आशा परिपूर्य्येत।

अथ रत्नगर्भस्तथागतो महाबलवेगधारिणो माणवकस्य साधुकारमदात्। साधु साधु सत्पुरुष भविष्यसि त्वं सत्पुरुष सत्त्वानां भैषज्यभूतः दुःखेभ्यश्च परिमोचकस्तेन त्वं सत्पुरुष भैषज्यराजज्योतिर्विमलो नाम भवस्व। भविष्यसि त्वं भैषज्यराजज्योतिर्विमलानागतेऽध्वलोकस्मिन् गङ्गानदीवालिकासमे संख्येयेऽतिक्रान्तेऽनुप्रविष्टे द्वितीये गङ्गानदीवालिकासमे संख्येये भद्रके कल्पे चतुरुत्तरस्य बुद्धसहस्रावशिष्टाभिसंबुद्धानां पिण्डपातं दास्यसि। यावद्यथा त्वया प्रणिधानं कृतं निर्वृतस्य च हरिचूडभद्रस्य तथागतस्य सद्धर्म्मेऽन्तर्हितेऽनुत्तरां सम्यक्सम्बोधिमभिसंभोत्स्यसे। रोचश्च नाम तथागतो भविष्यसि। यावद्बुद्धो भगवान्। अर्द्धकल्पं च ते आयुर्भविष्यति यावच्च तस्य चतुरुत्तरस्य बुद्धसहस्रस्य भद्रकल्पिकानां श्रावकसंघो भविष्यति। तावच्च तवैकस्य श्रावकसंघो भविष्यति। तावतश्च सत्त्वान् विनयिष्यसि। परिनिर्वृतस्य च सद्धर्मान्तर्धानं भद्रकस्य महाकल्पकस्य कल्पक्षयो न भविष्यसि। एतावन्तश्च बुद्धविग्रहाश्च भविष्यन्ति। यावच्छून्येषु बुद्धक्षेत्रेषु गन्धवृष्टिः सत्त्वानां श्लेष्मव्याधीर्दृष्टिव्याधीः कायव्याधीः प्रशमयिष्यन्ति। त्रिषु चैव पुण्यक्रियावस्तुषु सत्त्वान् प्रतिष्ठापयिष्यति स्वर्गपरायणांश्च॥

अथ खलु कुलपुत्र भैषज्यराजज्योतिर्विमलो बोधिसत्त्व आह । यदि मे भदन्त भगवन्नेवंरूपा आशा परिपूर्य्येत तथा मे भगवन् पुण्यलक्षणालङ्कृतेन पाणिना मूर्द्धानं स्पृशतु । अथ खलु कुलपुत्र रत्नगर्भस्तथागतः । शतपुण्यलक्षणालङ्कृतेन पाणिना भैषज्यराजज्योतिर्विमलस्य बोधिसत्त्वस्य मूर्द्धानं परिमार्ज्जयित्वा तस्थौ । अथ खलु कुलपुत्र भैषज्यराजज्योतिर्विमलो बोधिसत्त्वस्तुष्ट उदग्र आत्तमनाः प्रमुदितचित्तो रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादौ शिरसा वन्दित्वैकान्तेऽतिक्रम्य स्थितं समुद्ररेणुर्ब्राह्मणो दिव्येन स्वरेण आराधयित्वोवाच । साधु साधु सत्पुरुष शोभनं प्रणिधानं कृतं । न भूयस्त्वं त्वा समोपस्थानं कर्त्तव्यं । यथा सुखमेव विहरस्व ।

अथ खलु कुलपुत्र समुद्ररेणोर्ब्राह्मणस्यैतदभवत् मया बहवः प्राणकोटीनयुतशतसहस्राण्यनुत्तरायां सम्यक्सम्बोधौ समादापितानि यथेदं सर्व्वावन्तं पर्षदं पञ्चभिः सर्व्वक्षेमैमैत्राश्चैकशतोत्तराणि प्रणिधानानि कृतानि समग्राणि च बुद्धक्षेत्राणि परिगृहीतानि स्थापयित्वा वा प्रविसनाऽन्यैर्बोधिसत्त्वैः कलियुगसम्परिवर्ज्जितं । मयापि कलियुगकाले वर्त्तमाने सत्त्वा धर्म्मरसेन तर्पयितव्या दृढश्च व्यवसायः कर्त्तव्यः । तथारूपेण च मया प्रणिधानेन सिंहनादो नदितव्यः । यथेमं सर्व्वा बोधिसत्त्वपर्षदाश्चर्य्यप्राप्ता भवेत् सर्व्वावतीयं पर्षत्सदेव गन्धर्व्वमानुषासुरस्य लोको यस्मा प्राञ्जलीभूते नमस्येत । पूजां च कुर्य्यादियं च मे बुद्धो भगवान् साधुकारमनुप्रयच्छेत् । व्याकुर्य्यां तथा पञ्चदशसु दिक्षु बुद्धा भगवन्तः तिष्ठन्ति यापयन्ति सत्त्वानां धर्म्मं देशयन्ति तेऽपि बुद्धा भगवन्तो मम सिंहनादं नदतः साधुकारं प्रादद्युः । व्याकुर्य्युश्चानुत्तरायां सम्यक्सम्बोधौ दूतांश्च प्रेषयेयुर्यत् सर्व्वावतीयं पर्षत् शृणुयात्तांश्च दूतान् पश्येत् । येऽपि च सत्त्वा पश्चात्काले महाकरुणासमन्वागता बोधिसत्त्वास्तेऽप्येवंरूपं श्लिष्टं बुद्धक्षेत्रं महाकलियुगकाले बोधिप्रणिधानेन प्रतिगृह्णीयुर्धर्म्मेदुर्भिक्षकान्तारे क्लेशो पैरुत्तमानान् सत्त्वान् परित्रायेयुः । बुद्धकार्य्यं च कुर्य्युः । सत्त्वानां धर्म्मं देशयेयुः । यावत् परिनिर्वृतस्यापि मेऽचिन्त्या. कल्पकोटीनयुतशतसहस्रातिक्रान्ते दशसु दिक्ष्वसंख्येभ्योऽपरिमाणेभ्यश्च बुद्धक्षेत्रेभ्योऽपरिमाणा बुद्धा भगवन्तो मम परिनिर्वृतस्य वर्णं भाषेरन् । यशश्च घोषं च चारयेयुः । बोधिसत्त्वानां चाग्रतो मम प्रणिधानमेवोद्गृह्णापयेयुः । ते च बोधिसत्त्वा मम करुणा परिभावितावधिष्ठानं प्रणिधानं श्रुत्वा परमाश्चर्य्यप्राप्ता भवेयुः । तेऽपि सत्त्वेभ्यो महाकरुणां संजनयेयु. । ततश्च ते एवंरूपमेव प्रणिधानं प्रतिगृह्णीयुर्यथाऽहमेतर्हि प्रतिगृह्णामि । तेऽप्येवंरूपे क्लिष्टे बुद्धक्षेत्रे बोधिमभिसम्बुध्येयुः । चतुर्भिराद्यैः सत्त्वान् प्रत्युत्थमानानुत्तारयेयुः । त्रिभिश्च यानैर्विनयेयुः । यावन्निर्व्वाणपथे स्थापयेयुः । एवंरूपं कुलपुत्र समुद्ररेणुर्ब्राह्मणोऽत्र पुरोहितो महाकरुणापरिभावितं प्रणिधानं मर्षयित्वा एकांशं चीवरं प्रावृत्य येन रत्नगर्भस्तथागतस्तेनोपसंक्रामन्ति स्म । तेन खलु पुन. समयेन बहुकोटीनियुतशतसहस्राणि गगनतले दिव्यानि तूर्य्यकोटिनियुतशतसहस्राणि वादयन्ति । पुष्पवृष्टिश्च प्रवर्षिता । एककण्ठेन घोषाहरन्ति । साधु साधु सत्पुरुष उपसंक्रम त्वं भगवतः सकाशं गृह्णत्वं प्रवरप्रणिधानं । क्लेशव्याकुले लोके प्रशमयिष्यसि दुःखस्कन्धं सत्त्वानां ज्ञानतोयेन प्रशमयिष्यसि । सर्व्वावती च पर्षत् प्राञ्जलीभूता । अभिमुखा एककण्ठेन

वदति । साधु साधु सत्पुरुषप्रवरपण्डितोऽस्माकं हितकर कुरुष्व दृढप्रणिधानं प्रवरबुद्धिमयं शृणामः * । पुरोहितश्चोपसंक्रामति यदा च निक्षिप्तं पुरोहितेन भगवतः सकाशे जानुमण्डलं । तावच्चायं त्रिसाहस्रमहासाहस्रो लोकधातुः सर्व्वावतीदं संतरणं बुद्धक्षेत्रं कम्पति चलति प्रचलति क्षुभ्यति प्रक्षुभ्यति वेधति प्रवेधति । अघट्टितानि तूर्य्याणि प्रवाद्यन्ति । ये च मृगपक्षिणस्ते सर्व्वमनोज्ञं स्निग्धं च शब्दमुदीरयन्ति । वृक्षाश्च पुष्पाणि प्रमुञ्चन्ति । ये केचिदस्मिंस्त्रिसाहस्रमहासाहस्रलोकधातौ पृथिवीं निश्रित्यभूताः प्रतिवसन्ति ये बोधौ समादापिता येन च समादापिताः स्थापयित्वा नैरयिकं यामलौकिकं च सर्व्वे हितचित्ता अकलुषचित्ता आश्चर्य्यचित्ता बभूवुः । ये सत्त्वाः स्वर्गचरास्तेऽवस्था एव परमप्रीतिमनसः पुष्पैर्माल्यैर्धूपैर्गन्धैर्वाद्यैश्छत्रध्वजैः पताकाभिर्वस्त्रयुग्मैः स्निग्धमनोज्ञं शब्दं ब्राह्मणस्य प्रणिधानं श्रवणायोद्युक्ताः पूजाकर्म्मणश्चैवं यावदकनिष्ठभवनपर्य्यन्ता देवा जम्बूद्वीपमवतीर्य्य गगनतले स्थित्वा दिव्यैर्गन्धैर्यावद्दुष्यै ब्राह्मणस्य प्रणिधानं श्रवणायोद्युक्ताः पूजाकर्म्मणो ब्राह्मणस्याञ्जलिं प्रगृह्याभिर्गाथाभिरुत्तगर्भं तथागतमभितुष्टाव ।

ध्यानेभिर्विक्रीडसि ब्रह्मरिवा रूपेण प्रभावसि शक्ररिव
धनधान्य प्रयच्छसि राजरिवा रतनाग्रधरो मुनि ।
श्रेष्ठिरिवा गिरिसौम्यविमर्द्दसि सिंहरिवानेव कम्पसे दृढमेरुरिव
न च क्षोभ्यसे उदधीषरिवा गुणदोषवशी समुद्रवारिरिव ॥

मलसर्व्वप्रवाहसि तो पुरिवाद् हि क्लेशवनं मुनिरग्निरिवा
न च सज्जसे क्वचि वायुरिवा मुनितत्त्व निदर्शकदेवुरिवा ।
मुनिधर्म्मप्रवर्षसि नागुरिवा जगसर्व्व तर्पयसि वृष्टिरिवा
अन्यतीर्थप्रमर्द्दसि सिंहरिवा गुणगन्धप्रमुञ्चसि पुष्परिवा ॥

मधुर गिर भाषसि ब्रह्मरिवा जगदुःखप्रमुञ्चकवैद्यरिवा
समचित्तमुपस्थितिहिमातरिवा जगनित्यमुपस्थसि मित्ररिवा ।
किरमाल अरिदृढवज्ररिवा छिन्दि तृष्णलता मुनि शक्ररिवा
जग तारयसे नदितानुरिवा दहि ज्ञानतृणमुनिनागरिवा ॥

दहि शीतप्रभा मुनिचन्द्ररिवा नरपभवि बोधयि सूर्य्यरिवा
चतुरयफलान्दधिहृचेरिवा रिपिसंघहतो मुनिपच्चिरिवा ।

* अत्र शृणुम इति पाठो युक्तः ।

जिनबुद्धविशालसमुद्ररिवा समचित्त जगे तृणकाष्ठरिवा
शून्यधर्म्म निरीक्षसि स्वप्नरिवा समलोकनुवर्त्तसि वारिरिवा ॥

मुनि बोधिय व्याकृतसत्त्वतया वरलक्षणधारि सुकारुणिका
त्वयि सत्त्व विनीत अनन्त बहु मम व्याकरि बोधिय अग्रवरे ।
वरप्रज्ञ सत्परिषि सत्पुरुषैः मम व्याकरि बोधिय छिन्दिमती
भवि बुद्ध जगे कलिक्लेशरणैः स्थपि सत्त्वशतांशि विशांतपथे ॥

यदा कुलपुत्र समुद्ररेणुर्ब्राह्मणोऽग्रपुरोहितो रत्नगर्भं तथागतमाभिर्गाथाभिः स्तुत्वा स्थितो तावदेव सा सर्व्वावती पर्षत् सदेवगन्धर्व्वमानुषा साधुकारमदात् । पुरोहित आह । मया भदन्त भगवन् बहुप्राणकोट्योऽनुत्तरायां सम्यक्सम्बोधौ समादापितास्तेऽद्य स्वकस्वको दारदाराणि बुद्धक्षेत्राणि परिगृहीतानि परिशुद्धाशयावरूपकुशलमूलाः सुविनीताः सत्त्वा वैनेयाः परिगृहीता इमे च ज्योतिपाल पूर्व्वंगमानां चतुरुत्तरसहस्रं देवपुत्राणां ये तथागते भद्रकल्पिका व्याकृताः । तेऽपि सत्पुरुषा रागद्वेषमोहमानचरिता स्त्रिभिर्यानैर्विनयन्ति तत्रापि ते लोभक्लेशावरणकलियुगकषायाः परिवर्जिता लोकसत्त्वान् अनन्तर्य्यकारकाः सद्धर्म्मप्रतिषेधकाः । आर्य्यापवादका मिथ्यादृष्टय आर्य्यमार्गधनविरहिता अमातृका अश्रामण्या अब्राह्मण्या अकृत्यकारका अपुण्यकरा परलोकभयादर्शिनो विपरीततत्त्वबोधिनोऽलापका स्तुपु सुचरितेषु । तथा देवमानुषिकाभिः श्रीसंपत्तिभिरयुक्ताः त्रिषु दुश्चरितेषु संप्रतिपन्नाः । दशसु कुशलेषु कर्म्मपथेषु विरहिताः सर्व्वकल्याणमित्रैर्विरहिताः सर्व्वपण्डितैः प्रतिक्षिप्ता भवचारकेऽनुक्षीतसुप्ततमाः सागरद्यां सीदन्तः संसारपङ्कमोहान्धकारविक्षिप्ता निर्मुक्ताः सर्व्वकुशलक्रियायां सर्व्वशून्येषु बुद्धक्षेत्रेषु क्षिप्ताः अकुशलमूलसमवधानगताः । कुमार्गनिहन्तको महापंकटमाप्तास्तस्मिन् काले सहे बुद्धक्षेत्रे दशवर्षायुष्का भद्रकल्पमनुष्या भविष्यन्ति । सर्व्वे इमे सत्पुरुषैः पण्डितैरुत्सृष्टा उज्झिता सत्कार्ले भवान्तरसंधे संसारावर्त्ते पाता अशरणा अपरायणदुःखभाजनभूताः सत्त्वास्ते परिवर्ज्जिताः स्वकस्वका बुद्धक्षेत्राः प्रधानप्रधानाः परिगृहीताः सुविनीताश्च परिशुद्धाशयाः । अवरूपकुशलमूलाः आरब्धवीर्य्या बहुबुद्धकृताधिकारा वैनेयाः परिगृहीता न एवं भदन्त भगवन् रत्नगर्भस्तथागत आह ।

एवं ब्राह्मण यथाभिप्रायाः सत्त्वाः प्रणिधानं कुर्व्वन्ति । बुद्धक्षेत्रगुणव्यूहाय परिगृहीतास्तथैव च मया व्याकृताः । ब्राह्मण आह । ममापि भदन्त भगवन् हृदयं कम्पति । तद्यथापि किंशुकपत्रं प्रकम्पमानमिवोऽहं सर्व्वशरीरं च मे आयासितं यदि मे भदन्त भगवन् सत्त्वाः करुणास्पदभूतो बोधिसत्त्वैस्तत्कालमुत्सृष्टा । महाकलियुगान्धकारप्रक्षिप्ताः सर्व्वे परिवर्जिताः । अद्यापि भदन्त भगवन्नात्यसेऽध्वनि अतिक्रान्ते एकगङ्गानदीवालिकासमे संख्येयेऽवशिष्टे द्वितीये गङ्गानदीवालिकासमे संख्येये तस्मिंश्च भद्रके महाकल्पे दशवर्षशतायुष्काणां प्रजानां कालं प्रतिसमादापयावचिरमहं संसारे न परिखिन्नोऽयं बोधिचारिकां

चरमाणा उत्सहामि चाहं समाधानबलेन चिरयाचनया वैनेयान् प्रतिगृह्णामि । षट्पारमिताश्चरमाणो वैनेयान् प्रतिगृह्णामि श्रुतं च मया भगवतः सकाशाद्वस्तुनिमित्तं परित्यजेयं दानपारमितां । तथारूपामहं दानपारमितां चरिष्यामि यथा जन्मान्तरेषु प्रमेयाः सत्त्वा याचनका आगमिष्यन्ति तेषां तथारूपं परित्यागं परित्यजेयं । तद्यथान्नपानखाद्यभोज्यपेयलेह्यवस्त्रशय्यासनाश्रयप्रतिश्रयमाल्यगन्धविलेपनग्लानप्रत्ययभैषज्यदानं छत्र-ध्वज-पताका-धन-धान्य-हस्त्यश्व-रथ-सुवर्ण-रूप्य-हिरण्यमणिमुक्ता-वैडुर्य्यशंखशिला-प्रवाड़-रजत-जातरूपदक्षिणावर्त्त-सर्व्वाभरणमेयं परित्यागं परमप्रसादकारुण्यमानसः सत्त्वानां दत्त्वाऽफलाभिकाङ्क्षी सत्त्वपरिपाचनार्थं वैनेयसत्त्वानुग्रहार्थं त्यागसम्भारं परित्यजेयं ।

येषां पुनः सत्त्वा अतित्यागयाचनका आगत्य याचेरन् तद्यथा दासदासीग्रामं नागराजभार्य्यापुत्रदुहितृहस्तपरित्यागकर्णनासानयनजिह्वाचर्म्मरुधिरास्थिकायजीवितशिरः-परित्यागं एवंरूपाः परित्यागाः परमप्रसन्नः कारुण्यमानसः अफलाभिकाङ्क्षी सत्त्वानां दानं दद्यां वैनेयानुकम्पार्थं तथारूपायामहं दानपारमितायां चरिष्यामि यन्न कदाचित् पूर्व्वं केनचित् सत्त्वेन एवंरूपाः परित्यागाः परित्यक्ताः स्युर्न च पुनः कश्चित् सत्त्वो बोधिसत्त्वः । अनुत्तरायां सम्यक्सम्बोधौ चारिकां चिरचरमाणः एवंरूपाः परित्यागाः परित्यजेत् यदहं तेषु जन्मान्तरेषु अप्रमेयासंख्येयेषु कल्पकोटीनयुतशतसहस्रेष्वनुत्तरायां सम्यक्सम्बोधौ चारिकां चरमाणः दानपारमितायां चरेयं यदहं महाकरुणासमन्वागतानां पश्चिमकानां बोधिसत्त्वानां परित्यागेन त्रिगुणान् स्थापयेयमश्रमारखिक्लिश्यानामियं शीलपारमिता तथाऽहमनुत्तरायां सम्यक्सम्बोधौ चारिकां चरमाणो विविधशीलव्रतस्त्वरदुष्करे चारिकां चरेयं यथापूर्व्वोक्तं यो विषयेष्वक्षुब्धमनसा आत्मप्रवेक्षणा इयं क्षान्तिपारमिता तथारूपामहं क्षान्तिं भावयमानो यथापूर्व्वोक्तां । यात्रिवेकता सर्व्वसंस्कृतभावना उद्युक्तता सर्व्वासंस्कृतशान्तमनुत्तरचर्य्यया विवर्त्तना इयं वीर्य्यपारमिता । ये सर्व्वसंस्कारेषु विपर्य्यसमहाणाय शून्यता समुदाचारः । इयं ध्यानपारमिता या प्रज्ञात्यनुत्पत्तिकधर्म्मक्षान्तिरियं प्रज्ञापारमितायां अप्रमेयासंख्येयेषु कल्पकोटीनयुतशतसहस्रेषु दृढोत्साहबलवेगचर्य्या यथापूर्व्वोक्तेन कश्चिद्बोधिसत्त्वोऽनुत्तरायां सम्यक्सम्बोधौ चारिकां चरमाणः एवं दृढोत्साहबलवेगेन प्रज्ञापारमितायां चरन्नथाहं चरेयं पश्चिमकानां महाकरुणासमन्वागतानां मैत्रीगुणं स्थापयेयं प्रथमचित्तोत्पादेनाहं पश्चिमकानां बोधिसत्त्वानां महाकरुणां निवर्त्तयेयं । यावदनुत्तरपरिनिर्व्वाणेन बोधिसत्त्वाश्चाश्चर्य्यप्राप्ता भवेयुरित्यर्थमहं त्यागस्यान्यूनता चरेयं । शीला निश्रयता क्षान्त्यामन्यूनता । वीर्य्येण पूरनता । ध्यानेष्वप्रतिष्ठिता प्रज्ञा यामद्वयतां चरेयं । अफलाकाङ्क्षी । आर्य्यधनविरहितानां सत्त्वानां सर्व्वशून्यबुद्धक्षेत्रोज्झितानां सद्धर्म्मप्रतिक्षेपकानां आर्य्यापवादकानां मिथ्यादृष्टिकानां अकुशलमूलघनवधानसङ्कटप्राप्तानां कुमार्गविहन्यमानानां सत्त्वानामर्थायाहं पारमितास्तीव्रबलवेगोत्साहेन चरेयं । एकैकस्य सत्त्वस्यार्थं चाहं कुशलमूलसन्तत्याः प्रतिष्ठापनार्थं दशमहाकल्पानवीचिनरके दुःखां वेदनामुत्सहेयं । एवं तिर्य्यक्प्रेतेषु यक्षदरिद्रेषु मनुष्यशरीरेषु दुःखां वेदनामुत्सहेयं । यथा चैकसत्त्वस्य संतत्यां कुशलमूलबीजं प्रतिष्ठापयेयं । तथा सर्व्वसत्त्वानां एवंरूपारिक्तमुष्टिसदृशसत्त्वानां वैनेयां प्रतिगृह्णीयां । यावत्

चरमाण उत्सहामि चाहं समाधानबलेन चिरयाचनया वैनेयान् प्रतिगृह्णामि । षट्पारमिताश्चरमाणो वैनेयान् प्रतिगृह्णामि श्रुतं च मया भगवतः सकाशाद्वस्तुनिमित्तं परित्यजेयं दानपारमितां । तथारूपामहं दानपारमितां चरिष्यामि यथा जन्मान्तरेषु प्रमेयाः सत्त्वा याचनका आगमिष्यन्ति तेषां तथारूपं परित्यागं परित्यजेयं । तद्यथान्नपानखाद्यभोज्यपेयलेह्यवस्त्रशय्यासनाश्रयप्रतिश्रयमाल्यगन्धविलेपनग्लानप्रत्ययभैषज्यदानं छत्र-ध्वज-पताका-धन-धान्य-हस्त्यश्व-रथ-सुवर्ण-रूप्य-हिरण्यमणिमुक्ता-वैदुर्य्यशंखशिला-प्रवाड़-रजत-जातरूपदक्षिणावर्त्त-सर्व्वामरणेयं परित्यागं परमप्रसादकारुण्यमानसः सत्त्वानां दत्त्वाऽफलाभिकाङ्क्षी सत्त्वपरिपाचनार्थं वैनेयसत्त्वानुग्रहार्थं त्यागसम्भारं परित्यजेयं ।

येयं पुनः सत्त्वा अतित्यागयाचनका आगत्य याचेरन् तद्यथा दासदासीग्रामं नागराजभार्य्यां पुत्रदुहितृहस्तपरित्यागकर्णनासानयनजिह्वाचर्म्मरुधिरास्थिकायजीवितशिरः-परित्यागं एवंरूपाः परित्यागाः परमप्रसन्नः कारुण्यमानसः अफलाभिकाङ्क्षी सत्त्वानां दानं दद्यां वैनेयानुकम्पार्थं तथारूपायामहं दानपारमितायां चरिष्यामि यन्न कदाचित् पूर्व्वं केनचित् सत्त्वेन एवंरूपाः परित्यागाः परित्यक्ताः स्युर्न च पुनः कश्चित् सत्त्वो बोधिसत्त्वः । अनुत्तरायां सम्यक्सम्बोधौ चारिकां चिरचरमाणः एवंरूपाः परित्यागाः परित्यजेत् यदहं तेषु जन्मान्तरेषु अप्रमेयासंख्येयेषु कल्पकोटीनयुतशतसहस्रेष्वनुत्तरायां सम्यक्सम्बोधौ चारिकां चरमाणः दानपारमितायां चरेयं यदहं महाकरुणासमन्वागतानां पश्चिमकानां बोधिसत्त्वानां परित्यागेन त्रिगुणान् स्थापयेयमशमारक्षितक्षेत्रानामियं शीलपारमिता तथाऽहमनुत्तरायां सम्यक्सम्बोधौ चारिकां चरमाणो विविधशीलव्रतसन्तरदुष्करे चारिकां चरेयं यथापूर्व्वोक्तं यो विषयेष्वक्षुभमनसा आत्मप्रवेक्षणा इयं क्षान्तिपारमिता तथारूपामहं क्षान्तिं भावयमानो यथापूर्व्वाक्तां । यात्रिवेकता सर्व्वसंस्कृतभावना उद्युक्तना सर्व्वासंस्कृतशान्तमनुत्तरचर्य्यया विवर्त्तना इयं वीर्य्यपारमिता । ये सर्व्वसंस्कारेषु विपर्य्यसमहाणाय शून्यता समुदाचारः । इयं ध्यानपारमिता या प्रज्ञात्यनुत्पत्तिकधर्म्मक्षान्तिरियं प्रज्ञापारमितायां अप्रमेयासंख्येयेषु कल्पकोटीनयुतशतसहस्रेषु दृढोत्साहबलवेगचर्य्यां यथापूर्व्वोक्तेन कश्चिद्बोधिसत्त्वोऽनुत्तरायां सम्यक्सम्बोधौ चारिकां चरमाणः एवं दृढोत्साहबलवेगेन प्रज्ञापारमितायां चरन्नथाहं चरेयं पश्चिमकानां महाकरुणासमन्वागतानां नैश्रीगुणं स्थापयेयं प्रथमचित्तोत्पादेनाहं पश्चिमकानां बोधिसत्त्वानां महाकरुणां निवर्त्तयेयं । यावदनुत्तरपरिनिर्व्वाणेन बोधिसत्त्वाश्चाश्चर्य्यप्राप्ता भवेयुरित्यर्थमहं त्यागस्यान्यूनता चरेयं । शीला निश्रयता क्षान्त्यामन्यूनता । वीर्य्येण पूहनता । ध्यानेष्वप्रतिष्ठिता प्रज्ञा यामद्वयतां चरेयं । अफलाकाङ्क्षी । आर्य्यसमधनविरहितानां अत्त्वानां सर्व्वशून्यबुद्धक्षेत्रोज्झितानां सद्धर्म्मप्रतिक्षेपकानां आर्य्यापवादकानां मिथ्यादृष्टिकानां अकुशलमूलसमवधानसङ्कटप्राप्तानां कुमार्गविहन्यमानानां सत्त्वानामर्थायाहं पारमिताक्षीत्रबलवेगोत्साहेन चरेयं । एकैकस्य सत्त्वस्यार्थं चाहं कुशलमूलसन्तत्याः प्रतिष्ठापनार्थं दशमहाकल्पानवीचिनरके दुःखां वेदनामुत्सहेयं । एवं तिर्य्यक्प्रेतेषु यत्तदरिद्रेषु मनुष्यशरिरेषु दुःखां वेदनामुत्सहेयं । यथा चैकसत्त्वस्य संतत्यां कुशलमूलबीजं प्रतिष्ठापयेयं । तथा सर्व्वसत्त्वानां एवंरूपारिक्तमुष्टिसदृशसत्त्वानां वैनेयां प्रतिगृह्णीयां । यावत्

देवानां धर्मं देशयेयं । वैनेयांश्च प्रतिगृह्णीयां यावद्विंशद्वर्षशतं सत्त्वानामायुर्भविष्यति । सत्त्वा आश्चर्यकुलरूपमदमत्ता मत्सरिणो भविष्यन्ति । पञ्चकषायान्धकारप्रक्षिप्ताः सत्त्वा तीव्ररागास्तीव्रद्वेषास्तीव्रमानास्तीव्रपापेर्ष्या मत्सरिणोऽधर्मरागरक्ता अधर्मभोगपर्येष्टिनो मिथ्यादृष्टयो विपरीतदर्शना आर्यधनविरहिता अमातृज्ञा अपितृज्ञा अश्रामण्या अब्राह्मण्या अकृत्यकरा अपुण्यकरा अपरलोकभयदर्शिनोऽनभियुक्ता स्त्रिषु पुण्यक्रियावस्तुषु अनर्थिकास्त्रिभिर्यानैरनभियुक्ता स्त्रिषु सुचरितेषु । अभियुक्ता स्त्रिषु दुश्चरितेषु । अनभियुक्ता दशसु कुशलेषु कर्मपथेषु अभियुक्ता दशस्वकुशलेषु कर्मपथेषु । चतुर्विपर्य्यासोपहताश्चतुर्विपत्तिसंस्थानाश्चतुर्मारवशगताश्चतुर्भिरोघैरुह्यमानाः पञ्चनीवरणवशगताः सत्त्वा भविष्यन्ति । षडिन्द्रियमदमत्ता अष्टमिथ्यात्वप्रतिपन्नाः कामपङ्कमग्ना अनुशयसमुत्थापका अनर्थिका देशानुपूर्व्वीसम्पत्तिभिर्विपरीतदृष्टिकाः । कुमार्गे विहन्यमाना आनन्तर्यकारकाः सद्धर्मप्रतिक्षेपका आर्यापवादकाः सर्व्वकुशलमूलपरिहीणाः धाङ्क्षा मुखरा अकृतज्ञाः । मुष्टस्मृतयः कुशलाः जुगुप्सका दुःप्रज्ञा अल्पश्रुताः दुःशीलाः कुहका मत्सरिणः पारुष्यभाषका अन्योन्यागौरवाः कुशीदाः विकलेन्द्रिया दुर्बलाश्चीवरविरहिता अकल्याणमित्रसंगृहीता गम्भीरस्मृतिप्रनष्टा विविधरोगोपहताः क्लिष्टा दुर्वर्णा अश्रद्धाधिमुक्ता अह्रीका अनपत्राप्याः परस्परहिता एकत्र्व्वभक्तीन बहुकायवाचा मनसा दुश्चरितं समाचरन्ति । ते प्रशंसितशाश्वतदृष्टिकाः सत्त्वा भविष्यन्ति पञ्चस्कन्धाभिनिविष्टचित्ताः पञ्चकामगुणगृद्धचित्ता दुष्टचित्ता व्यापन्नचित्ता वैरचित्ता विहिंसाचित्ताः कलुषचित्ताः मत्तचित्ताः क्षुभितचित्ता अदान्तचित्ता अहितचित्ता उद्धतचित्ता अधर्माभिनिविष्टचित्ता अव्युपशमितचित्ता परस्परमारणचित्ताः परस्परवधकचित्ता धर्मविवर्जितचित्ता अविपक्षचित्ता धर्मेषु सारम्भचित्ता अकुशले उत्साहितचित्ताः शान्तनिर्व्वाणपर्य्येष्टिचित्ता अशीलोपचित्ताः सर्व्वसंयोजनबन्धनसमुद्घातचित्ता व्याधिजरामरणसंप्रत्ययचित्ताः सर्व्वसंयोजनाधिष्ठितचित्ताः सर्व्वबीजपरिग्रहचित्ताः धर्मध्वजप्रपातनचित्ता दृष्टिध्वजोच्छ्रयणचित्ताः परस्परावर्णचित्ता अन्योन्यभक्षणचित्ताः परस्परपाशनैश्वर्य्यचित्ता द्वीपसमुद्रग्रहणचित्ता । अन्योन्याघातचित्ताः कामेभ्यो(ऽ)तृप्तचित्ताः सर्व्वपरिग्रहमात्सर्य्यचित्ता अकृतज्ञचित्ताः परदाराक्रमणचित्ता व्यापादविहिंसनचित्ता अप्रणिधानचित्ताः सत्त्वास्तत्काले भविष्यन्ति । इमे चात्र शब्दाः परस्परान्तिकाच्छृण्वन्ति ।

नरकशब्दस्तिर्यग्योनिशब्दः यमलोकशब्दो व्याधिशब्दो जराशब्दो मरणशब्दो वधकशब्दोऽवरणशब्दो निर्यातिशब्दोऽहिनिगडबन्धनचारकशब्दो दण्डपीडनाशब्दो अर्थाक्रोशनपरिभाषणशब्दः सन्धिच्छेदनशब्दो ग्रामच्छेदनशब्दः चौर्यशब्दः परचक्रशब्दो दुर्भिक्षशब्दः काममिथ्याचारशब्दो मृषावादशब्द उत्पातशब्दः पैशुन्यशब्दः कलुष*शब्दः संभिन्नप्रलापशब्द ईर्षामात्सर्यशब्द आग्रहपरिग्रहशब्दोऽहङ्कारममकारशब्दः प्रियाप्रियशब्द इष्टानिष्टशब्दः प्रियविप्रयोगशब्दः क्रयविक्रयशब्दोऽन्योन्यदासविठेटनाशब्दो दुर्गन्धशब्दः शीतशब्द उष्णशब्दो जिघत्सा-पिपासाशब्दः श्रान्तक्लान्तवेदनाशब्दः कृषिकर्मान्तशब्दो

* अत्र कलुषशब्द इति पाठः समञ्जसः ।

विविधकर्म्मशिल्पपरिखिन्नशब्दो विविधरागोपहतशब्दः इमां च ते सत्त्वाः परस्परस्यान्तिकाच्छृण्वन्ति ।

एवंरूपैः परिहीनकुशलमूलैः परिहीनकल्याणमित्रैर्दुष्टचित्तैः सत्त्वैः तस्मिन् काले सहालोकधातुराकीर्णो भविष्य(न्ति)ति वर्जिताश्च ते सत्त्वा भविष्यन्ति सर्व्वज्ञैः शून्यैर्बुद्धक्षेत्रैर्ध्यान्नपानदमसंयमकुशलकर्म्मक्रियाकुशले समवधाना आर्य्याष्टाङ्गेन मार्गेण विरहिताः समस्तमपरायणाः प्रगाढकर्म्मप्रत्ययेन ते सत्त्वाः तस्मिन् समये भद्रकल्पे विंशोत्तरवर्षशतायुष्केषु प्रत्याजायिष्यन्ति तेषां सत्त्वानां कर्म्मप्रत्ययेन सहबुद्धक्षेत्रं हीनं भविष्यति सर्व्वरत्नसकुशलमूलैस्सत्त्वैः परिवर्ज्जिता सलवणा च पृथिवी भविष्यति पाषाणशर्करपांशुशिलापर्व्वतोत्सकुशला च धरणी भविष्यति । पक्षदंशमशकाशीविषचण्डमृगपक्षिभिराकीर्णा भविष्यति विषमकालकलुषा वायवो वास्यन्ति विषमकालातिसलवणविमिश्रा अशनिवर्षा पतिष्यन्ति । तथारूपाः पृथिव्यां अश्मोषधितृणवृक्षा पत्रपुष्पफला धान्यरसाः सत्त्वानामनोज्ञोपभोगपरिभोगविषमाः कलुषपरुषकलविषसंसृष्टा भविष्यन्ति । ते सत्त्वाः परिभक्तया भूयस्या मात्रया रुक्षा दुष्टाश्चण्डा रौद्राः परुषाः कर्कशाः परिभाषका अन्योन्यगौरवभीतेन चित्तेनाघातचित्ता वधकचित्ता भविष्यन्ति मांसभोजनरुधिराहारा मृगचर्म्मप्रावरणाः प्रहरणाधिष्ठानाः प्राणिवधोद्युक्ताः स्वकुलवंशैश्वर्य्यशस्त्रशिल्पाश्वारोहणधनुर्ग्रहायुधपरिवारा मात्सर्य्यदर्पिता भविष्यन्ति विविधलुब्धकव्रताभियुक्ता भविष्यन्ति लोकाः सत्का(त)मर्हं तुषितभवनादवतीर्य्य विशिष्टे चक्रवर्त्तिकुशलवंशे ईश्वरे राजकुले अग्रमहिष्याः कुक्षौ वैनेयसत्त्वे कुशलमूलपरिधारणार्थं* गर्भावासमुपसंक्रान्तो सर्व्वावन्तं तस्मिन् समये सहे बुद्धक्षेत्रे उदारेणावभासेन स्फुरेयं । ऊर्द्ध्वं यावदकनिष्ठभवनपर्य्यन्तेनाहं इदं यावत् काञ्चनचक्रपर्य्यन्तमुदारेणावभासेन स्फुरेयं ये च तस्मिन् समये सत्त्वाः सहे बुद्धक्षेत्रे प्रत्याजाता नरकेषु वा तिर्य्यग्योनौ वा यमलोके वा देवमनुष्ये वा ते सर्व्वे तमवभासं संपश्येयुः स्पृशेयु संजानेयुः तेषां संसारविमुखता दुःखोद्विग्नता निर्व्वाणाभिलाषमन्तशः क्लेशसमचित्तानुत्पादयेयु । इदं प्रथमे समग्रमार्गश्रीप्रमवरापयेयं । यदाहं सर्व्वधर्म्मनयविपश्चितं सर्व्वसमाधिनिर्द्देशमेकधर्म्मसुखमपरान्तकल्पनिर्द्देशेन समाहितचित्तो दशमासां मातुः कुक्षौ निवसेयं यावांश्चाहं प्राप्ते बुद्धत्वे सत्त्वा परिखिन्ना संसारे परिमोचयेयं । ते सत्त्वा मातुः कुक्षिगतं दशमासां मणिगर्भसन्दर्शनसमाहितचित्तं पर्य्यङ्केन निषण्णं पश्येयुः निर्गते च दशमासे सर्व्वपुण्यसञ्चयेनाहं समाधिना सर्व्वावन्तं सहबुद्धक्षेत्रं षड्विकारं धरणिं चालयेयं । ऊर्द्ध्वं यावदकनिष्ठभवने पर्य्यन्तं देवैर्मेन वा यावत्काञ्चनचक्रपर्य्यन्तं न चालयेयं ये च तस्मिन् समये सहे बुद्धक्षेत्रे सत्त्वाः प्रत्याजाता नरकेषु च यावान्मनुष्येषु वा तान् प्रबोधयेयं । यदाहं मातुर्दक्षिणे कुक्षावभिनिष्क्रमेयं पुनरपि च सर्व्वावन्तं सहं बुद्धक्षेत्रमुदारेणावभासेन स्फुरेयं । तदापि तस्मिन् समये सर्व्वान् सहे बुद्धक्षेत्रे सत्त्वान् संचोदयेयं । अवरुप्तकुशलमूलानां सत्त्वानां संताने निर्व्वाणबीजं प्रक्षिपेयं । अवरोपित-

* परिपाचनार्थमिति वा पाठः ।

निर्व्वाणवीजसन्ततीनां सत्त्वानां समाध्यङ्कुरमवरोपयेयं । यदा चाहं चरणतलेन धरणीं स्पृशेयं सर्व्वावती तस्मिन् समये सहे बुद्धक्षेत्रे षड्विकारं धरणीं चालयेयं । प्रकम्पयेयं क्षोभयेयं यावत्काञ्चनचक्रपर्य्यन्तेन । तदाहं तस्मिन् समये सत्त्वान् जलनिश्रितां क्षितिनिश्रितां खनिश्रितां चतुर्योनिपर्य्यापन्नां पञ्चगतिसंनिश्रितां तान् सर्व्वानहं प्रतिबोधयेयं । येषां सन्ताने सत्त्वानामनुलम्नं समाधानाङ्कुरं रोपयेयं दृढसमाधानाङ्कुरं त्रिभिर्यानैरवैवर्त्तिकं स्थापयेयं । सहजातमात्रस्य च मे यावदेव तस्मिन् सहे बुद्धक्षेत्रे महाब्रह्माणो वा मारो वा शक्रा वा चन्द्रा वा सूर्य्या वा लोकपाला वा महानागराजा वा असुरेन्द्रा वा औपपादुका वा महर्द्धिका वा यक्षराक्षसनागासुरा वा सर्व्वे मम पूजाकर्म्मणे उपसंक्रामेयुः सहजातमात्रश्चाहं सप्तपदानि प्रक्रामेयं सर्व्वपुण्यसमुच्चयेनाहं समाधिना तथारूपं धर्म्मं देशयेयं यत्तत्सर्व्वावती सापर्षत् त्रिभिर्यानैः प्रसादं प्रतिलम्भयेत् । ये च तत्र पर्षदि सत्त्वाः श्रावकयानिका भवेयुस्ते चरमभविका मम वैनेया भविका ये च तत्र सत्त्वाः प्रत्येकबुद्धयानिका भवेयुस्ते वैरोचकुसुमां क्षान्तिं प्रतिलभेयुः ये च तत्र सत्त्वा अनुत्तरमहायानिका भवेयुस्ते सर्व्वे वज्रधरसमुद्रसंकोचितं समाधिं प्रतिलभेरन् ते न च समाधिना तिस्रः भूमीः समतिक्रामेयुः यदहं स्नापनमिच्छेयं ये च तत्र महानागराजानो विशिष्टतरा भवेयुः । समां स्नापयेयुः । ये च सत्त्वा मां स्नाप्यमानं पश्येयुस्ते सर्व्वे त्रिभिर्यानैरेवंरूपान् गुणानधिगच्छेयुः यथाप्रोक्तं ये च मां सत्त्वा स्थानमभिरोहन्तं समनुपश्येयुर्विस्तरेण कुमारक्रीड़ाविविधशिल्पस्य नकर्म्मस्थानासनानि च ददर्शे शिक्षायनयोश्च अन्तरगारे पञ्चकामगुणरतिक्रीड़ाद्धराश्च मुद्रा निष्क्रमणालङ्कारविभूषणस्फोरणा लोहितवस्त्राभीष्टां काषायस्वपर्य्येषणाबोधिवृक्षोपसंक्रमणं ये च सत्त्वानामुपसंक्रमन्तं पश्येयुः तेषां चाहं सत्त्वानां सर्व्वपुण्यसमुच्चयेण समाधिना तथारूपं धर्म्मं देशयेयं यथा ते सत्त्वास्त्रिभिर्यानैस्तीव्रच्छन्दा उद्युज्येयुः ।

ये च तत्र सत्त्वाः प्रत्येकबुद्धयानिकास्ते सर्व्वे वैरोचनकुसुमां क्षान्तिं प्रतिलभेयुः । येश्च महायानवीजं प्रतिष्ठं भवेत्ते सर्व्वे वज्रधरसमुद्रं संकोपितं समाधिं प्रतिलभेयुस्तेन च समाधिना तिस्रो भूमिरतिक्रामेयुः । स्वयं चाहं तृणसंस्तरणं गृह्णीयां बोधिमूलवज्रासने प्रज्ञपेयं निषीदेयं पर्य्यङ्कमाबध्य ऋजुकेन कायेन तथारूपमहमास्फानकं ध्यानं ध्यायेयं आश्वासप्रश्वासा व्युपसंक्रमेयं । एकवारं दिवसेन ध्यानाद्व्युत्तिष्ठेयं । व्युत्थाय चाहमर्द्धतिलकफलमाहारमाहरेयं । अर्द्धं प्रतिग्राहकस्यानुप्रयच्छेयं तावच्चिरं चाहमेवंरूपां दुष्करचारिकां चरेयं । यावदकनिष्ठभवनपर्य्यन्तेन सर्व्वे देवा ये सहे बुद्धक्षेत्रे पर्य्यापन्नास्ते उपसंक्रामेयु र्मम च पूजां कुर्व्वाणाः सर्व्वे मे साक्षिणः स्युर्दुष्करचर्य्यायां । येश्च तत्र श्रावकयाने वीजमवरूपं स्यात्तेषां भदन्त भगवन् क्लेशव्युपशमाय सन्ताने भवेयं । चरमभविकाश्च मम वैनेया भवेयुः । ये प्रत्येकबुद्धयानिका यावद् यथापूर्व्वोक्तं एवं नागयक्षासुरगरुड़किन्नरमहोरगप्रेतपिशाचकुम्भाण्डाः पञ्चाभिज्ञा ऋषय उपसंक्रामेयु र्मम पूजाकर्म्मणः सर्व्वे च मे साक्षिणो भवेयुर्दुष्करचर्य्यायां ये च श्रावकयानिका यावद् यथापूर्व्वोक्तं ये च तत्र चातुर्द्वीपिकायामन्यतीर्थिका लूहतपो व्रतदुष्करचारिकां चरन्ति । तेषां वा मानुषा आरोचयेयुः । न यूयं दुष्करकारका यथास्मिन् प्रदेशे चरमभविको बोधिसत्त्वो दुष्करचारिकां चरति । तथारूपं ध्यायति हृदये मनस्कारं बध्नाति

कलुषचित्ताः प्रदुष्टचित्तास्ते मैत्र्याव्याहारधर्मं देशितमाजानीयुः प्राणातिपातिकाः करुणा-
देशितमाजानीयुः ये ईर्ष्यामात्सर्याभिभूतास्ते मुदिता व्याहारकथाधर्मं देशितमाजानीयुः
येऽरपाश्यमदमत्तचित्तास्ते उपेक्षाव्याहारकथाधर्मं देशितमाजानीयुः। येऽल्पश्रुतवादिनस्ते
संप्रमोषश्रुतधारणीविप्रणाशव्याहारेण धर्मं देशितमाजानीयुः कुदृष्टिसङ्कटप्राप्ता शून्यताव्या-
हारेण धर्मं देशितमाजानीयुः वितर्कसमुदाचारोपहताय अनिमित्तव्याहारेण धर्मं देशित-
माजानीयुः प्रणिहिता परिशुद्ध्यापहता अप्रणिहितव्याहारेण धर्मं देशितमाजानीयुः आश-
यपरिशुद्धाः परिशुद्धाशयव्याहारेण धर्मं देशितमाजानीयुः व्यवकीर्णसमुदाचारोपहतरोपि-
तचित्ता असंप्रमोषव्याहारेण धर्मं देशितमाजानीयुः समप्रयोगोपहता अकृत्रिमव्याहारेण
धर्मं देशितमाजानीयुः अध्याशयप्रश्रब्धोपहता अनिश्रितव्याहारेण धर्मं देशितमाजानीयुः
क्लिष्टचित्ताः पेयालं कल्पचित्ताव्याहारेण कुशलसंप्रमोषचित्ता वैरोचनव्याहारेण मारक-
र्मोद्युक्ताः शून्यताव्याहारेण परवधे संप्रतिपन्ना अभ्युद्गतव्याहारेण विविधक्लेशोपहत-
चित्ता विगतव्याहारेण विषममार्गसंप्रतिपन्ना आवर्तव्याहारेण महायानकौतूहलचित्ता
विवर्तव्याहारेण संसारोद्विग्नानां बोधिसत्त्वानां रतिव्याहारेण। कुशलभूमिक्षाना नवयाना
मूर्धाङ्कुरव्याहारेण। परम्परासंतुष्टकुशलमूलानां सुतापव्याहारेण। परस्परासमचित्तानाम-
प्रतिहतचित्तव्याहारेण विषमकर्मसंप्रतिपन्नानां क्रियाप्रसारणव्याहारेण। पर्यङ्कोपगतानां
सिंहकेतुव्याहारेण। चतुर्माराभिभूतचित्तानां शूरव्याहारेण। बुद्धक्षेत्रानवभासगतानां
सत्त्वानां प्रभाव्यूहव्याहारेण। अनुनयप्रतिघानां शैलोच्चयव्याहारेण। बुद्धधर्मालोकना-
भिभूतानां ध्वजाग्रकेयूरव्याहारेण। महाप्रज्ञाविरहितानां उल्कापातव्याहारेण मोहान्ध-
कारगतानां भास्करप्रदीपव्याहारेण। यथानिरुक्तिप्रयुक्तानां गुणाकरव्याहारेण। कल्पि-
तद्वीपमात्माभिकाङ्क्षिणां नारायणव्याहारेण चलाचलबुद्धीनां च चानुगतव्याहारेण।
अवलोकितमूर्धानामिन्द्रध्वजव्याहारेण। पूर्वप्रतिस्रोतसृष्टानां कारवत्तिव्याहारेणाच्युताभि-
ज्ञानां यशपदव्याहारेण। बोधिमण्डाभिकाङ्क्षिणां वज्रमण्डव्याहारेण। सर्वधर्म-
जुगुप्सितानां दर्शोपमव्याहारेण। सत्त्वचरितमप्रजानतां चारित्रगतिव्याहारेण। इन्द्रिय-
परापरानभिज्ञानां प्रज्ञाप्रदीपव्याहारेण। परस्परुतमप्रजानतां रुतप्रवेशव्याहारेण। धर्म-
कायमप्रतिष्ठानां धर्मकायविभावनव्याहारेण। तथागतदर्शनविरहितानामनिमिषव्या-
हारेण। सर्वालम्बनविशोधितानामरण्यव्याहारेण। धर्मचक्रप्रवर्तनाभिकाङ्क्षिणां चक्र-
विमलव्याहारेण। अहेतु विद्यासंप्रतिपन्नानां विद्याप्रतीत्यानुलोमव्याहारेण। एकपुद्
संज्ञायतनदृष्टीनां सुकृतविचयव्याहारेण। लक्षणानुव्यञ्जनानवमर्दितानां अलङ्कारयत्।
व्याहारेण वाचाकृतप्रभेदाशयानां निर्घोषगतिव्याहारेण। सर्वज्ञज्ञानाभिकाङ्क्षिणां
धर्मधात्वविकोपनव्याहारेण। अनुत्पन्नावर्तनधर्माणां दृढव्याहारेण। धर्मधातु प्रज्ञा-
नतामभिज्ञाव्याहारेण। मनोत्पन्नानामच्युतव्याहारेण मार्गविशोधितानामविकारव्याहा-
रेण। आकाशसमचित्तानामभिकाङ्क्षिणां निष्किञ्चनव्याहारेण। पारमितापरिपूर्णानां
परिशुद्धप्रतिष्ठाव्याहारेण। अपरिपूर्णसंप्रत्ययस्तूनां सुसंदर्शनव्याहारेण। प्रज्ञाविहा-
रविमार्गिनानां समप्रयोगव्याहारेण। बोधिमण्डे परिपूर्णानामव्यवस्थितनिर्याणव्याहा-

रेण। सुभाषितज्ञानां प्रमुदितचित्तानां सागरमुद्रव्याहारेण। अनुत्पत्तिकधर्मक्षान्ति कौतूहलचित्तानां निश्चितव्याहारेण। यथा श्रुतधर्मप्रमुदितचित्तानामसंप्रमोषव्याहारेण। परस्परसुभाषितासन्तुष्टानां वितिमिरव्याहारेण। त्रिरत्नप्रतिलब्धप्रसादानां पुण्योत्सेदव्याहारेण। धर्मसुखप्रवर्षणासन्तुष्टानां धर्ममेघव्याहारेण त्रिरत्नोच्छेदद्रष्टीनां रत्नव्यूहव्याहारेण। ज्ञानार्द्धिकर्माभियुक्तायां अनुपमव्याहारेण। सर्व्वसंयोजनबन्धनगतानां गगनमुखव्याहारेण। सर्व्वधर्मानित्यचित्तानां ज्ञानसमुद्रव्याहारेण। तथागतगुणपरिपूर्णानां लोकविश्वासंमुखीभावव्याहारेण। पूर्व्वबुद्धकुशलाधिकारिणां विनिश्चितप्रातिहार्य्यव्याहारेण। एकधर्ममुखापरान्तकल्पानिर्द्दिष्टानां सर्व्वधर्मनयव्याहारेण। सर्व्वसूत्रान्ताविनिश्चितानां धर्मस्वभावसमताविनिश्चितव्याहारेण। षट्पारमिताधर्मपरिवर्जितानां सर्व्वधर्मनयव्याहारेण। विमोक्षचित्ताश्रयानभियुक्तानां विक्रीडिताभिज्ञाव्याहारेण। तथागतगत्यानुप्रवेशविमर्शितानामपरप्रणेयव्याहारेण। आवेणिकधर्मा बोधिसत्त्वचर्य्याभियुक्तानां ज्ञानागमव्याहारेण। ज्ञातिकामसंदर्शिकानां सर्व्वज्ञानुगतव्याहारेण। सावशेषबोधिसत्त्वचारिकानां अभिषेकव्याहारेण। दशतथागतबलापरिपूर्णानामनवमर्द्यव्याहारेण। चतुर्वैशारद्यप्रतिलब्धानामपर्य्यादीनव्याहारेण। आवेणिकधर्माप्रतिलब्धानामसंहार्य्यव्याहारेण। अमोघश्रवणदर्शनानां प्रणिधानव्याहारेण। सर्व्वबुद्धधर्मसंमुखानुबोधाय श्रोताविलविमलमुद्रव्याहारेण। सावशेषसर्व्वज्ञज्ञानानां सुविशुद्धव्याहारेण। अप्राप्तसर्व्वतथागतकार्य्यभिः कार्य्यैरपर्य्यन्तनिष्ठाव्याहारेण धर्मदेशितमाज्ञानीयुरिति।

ये बोधिसत्त्वा अशठा अमायाविनो ऋजुका ऋजुकजातीयास्र तेषां चतुरशीतिधर्ममुखसहस्राणि षट्षष्टिधारणीसहस्राणि अप्रमेयानसंख्येयानां महायानसंप्रस्थितानां एकव्याहारेण। इमे गुणाः सन्ताने प्रतिष्ठापयेयं येन बोधिसत्त्वा महासत्त्वा महासंनाहसंनद्धा * भवेयुः। अचिन्त्यप्रणिधानविशेषाभ्युद्गता भवेयुरचिन्त्यज्ञानदर्शनबोधिवृक्षालङ्कृता भवेयुः। यद्यथा कायालङ्कृता लक्षणानुव्यञ्जनैः वागलङ्कृता भवेयुर्यथाभिप्रायाः सत्त्वाः सुभाषितेन सन्तोषयेयुः। श्रुतालङ्कृताः समाधिवचनताय। स्मृत्यालङ्कृता धारणसंप्रमोषतया मनोऽलङ्कृता निर्वृत्यालङ्कृताः। कुशलमूलनतया आशयालङ्कृता दृढप्रतिपत्ततया। प्रयोगालङ्कृताः प्रतिश्रोत्तारणतया अध्याशयालङ्कृता भूम्या भूमिसंक्रमणतया। दानालङ्कृताः सर्व्ववस्तुपरित्यागाय शीलालङ्कृताः सुगुप्ताचितरश्मिमलतया। क्षान्त्यालङ्कृताः सर्व्वसत्त्वाप्रतिहतचित्ततया। वीर्य्यालङ्कृताः सर्व्वसंभारोपचितया। ध्यानालङ्कृताः सर्व्वसमापत्तिविक्रीडिताभिज्ञा भवेयुः। प्रज्ञालङ्कृताः क्लेशवासनयाभिज्ञाविनो मैत्र्यालङ्कृता सर्व्वसत्त्वस्य ज्ञामानुगताः करुणालङ्कृताः सर्व्वसत्त्वोपरित्यागस्थिता मुदितालङ्कृताः सर्व्वधर्माकथंकथा-प्राप्त-उपेक्षालङ्कृता उन्नामावनामद्वयविगताः। अभिज्ञालङ्कृताः सर्व्वविक्रीडिताभिज्ञाः पुण्यालङ्कृता अक्षयभोगरत्नपाणिता प्रतिलब्धा ज्ञानालङ्कृताः सर्व्वसत्त्वचित्तचरिताभिज्ञा बुद्ध्यालङ्कृताः सर्व्वसत्त्वकौशल्यधर्मविबोधयितारः। आलोकालङ्कृताः प्रज्ञाचक्षुरालोकं प्रतिलभेयुः। प्रतिसंविदलङ्कृता अर्थधर्मनिरुक्तिप्रतिभानप्रतिसंविदप्रतिलब्धा भवेयुः वैशारद्यालङ्कृताः सर्व्वमारपरप्रवादिनभिभूता गुणालङ्कृता बुद्धानां गुणानुप्राप्ता धर्मालङ्कृताः सतत

समितमसङ्गप्रतिभानेन सत्त्वानां धर्म्मं देशयेयुः । आलोकालङ्कृता सर्व्वबुद्धधर्म्मावभासगताः प्रभालङ्कृताः सर्व्वबुद्धक्षेत्रावभासगता आदर्शनप्रातिहार्य्यालङ्कृता अच्छूराव्याकरणा । अनुशासनीप्रातिहार्य्यालङ्कृता यथावदनुशासनीप्रदायका ऋद्धिप्रातिहार्य्यालङ्कृताश्च नुतर्द्धिपादपरमपारमिप्राप्ताः सर्व्वतथागताधिष्ठानालङ्कृताश्च तथागतगुह्यानुप्रविष्टा धर्म्मैश्वर्य्यालङ्कृता अपराधीनज्ञानप्रतिलब्धाः । सर्व्वकुशलधर्म्मप्रतिपत्तिसाधनालङ्कृता यथावादि तथाकारि सर्व्वतो नमर्हिता भवेयुरिति । अप्रमाणासंख्येयानां महायानसंप्रस्थितानां सत्त्वानामेकपरस्याहारेणाहं महता कुशलविशोधनसंनियेन सन्तर्पयेयं । ततस्ते बोधिसत्त्वा महासत्त्वाः सर्व्वधर्म्मेष्वपरप्रत्ययज्ञानं प्रतिलभेयुः । महता च धर्म्मावभासेन समन्वागता भवेयुः । क्षिप्रं चानुत्तरां सम्यक्सम्बोधिमभिसंबुध्येयुरिति । येऽपि मे भदन्त भगवन् सत्त्वा भवेयुरन्येषु लोकधातुष्वानन्तर्य्यकारका यावन्मूलापत्तिसापराधिका दग्धसन्तानाः श्रावकयानिका वा प्रत्येकबुद्धयानिका वा । अनुत्तरमहायानिका वा । प्रणिधानवशेन मम प्रव्राजयेयुः । कुशलसमधानाज्ञताः पापेच्छाः कूरद्वंकसन्ताना विपरीतबुद्धये आवर्धितसन्तानाः । तेषां चाहं चतुरशीतिखिसततमरक्षां देशयेयुः । यावत् कुशलचित्तानां सत्त्वानामहं चतुरशीतिधर्म्मस्कन्धसहस्राणि विस्तरेण देशयेयं । ये च तत्र सत्त्वा अनुत्तरमहायानिका भवेयुः । तेषां चाहं विस्तरेण षट्पारमिता धर्म्मं देशयेयं । दानपारमिता विस्तरेण देशयेयं यावत् प्रज्ञापारमितां विस्तरेण देशयेयं । ये च पुनस्तत्र सत्त्वाः श्रावकयानिका वा प्रत्येकबुद्धयानिका वा भवेयुः । अनवरतकुशलमूला भवेयुः । शास्ताराभिकाङ्क्षिणः । तांश्चाहं त्रिशरणगमनेन व्यवस्थापयेयं । पञ्चपारमितासु नियोजयेयं । विहिंसारतानां प्राणातिपातवैरमण्यां व्यवस्थापयेयं । विषमलोभाभिभूतानामदत्तादानवैरमण्यां व्यवस्थापयेयं । अधर्म्मरागरक्तान् काममिथ्याचारवैरमण्ये व्यवस्थापयेयं । परस्परभेदवचनभाषिणो मृषावादवैरमण्यां व्यवस्थापयेयं । उन्मत्ताभिरतान् सुरामैरेयमद्यप्रमादवैरमण्यां व्यवस्थापयेयं । येषां च सत्त्वानां सर्व्वपञ्चदोषा भवेयुस्तान् पञ्चवैरमण्योपासकसंवरे व्यवस्थापयेयं । ये सत्त्वा अनभिरताः कुशलेषु धर्म्मेषु तांश्चाहं च रात्रिं दिवसमष्टाङ्गे शीले प्रतिष्ठापयेयं ये सत्त्वाः परीत्तकुशलमूलाभिरतचित्तास्तांश्चाहं श्रामण्ये धर्म्मविनये उपनेषयेयं प्रव्रज्यासंवरे दशशिक्षापदे ब्रह्मचर्य्ये स्थापयेयं । अनित्यदुःखानात्म-शून्यस्कन्धधात्वायतनानि दर्शयेयं कुशले क्षेमे शिवे शान्तेऽभयपुरे निर्व्वाणे प्रतिष्ठापयेयं एवमहं चतुर्णां पर्षदां भिक्षुभिक्षुण्युपासकोपासिकानां धर्म्मं देशयेयं । ये च वादार्थिनो भवेयुस्तेषामहं धर्म्मवादशास्त्रं प्रकाशयेयं । ये च नाभिरताः कुशलेष्वधर्म्मेषु तेषां चाहं सेवासुलदर्म्मणा निर्व्विशेयं । स्वाध्यायाभिरतानामेकोनेन शून्यतां ध्यानविमुक्तिगामिनीं निदर्शयेयं । एकैकस्य सत्त्वस्यार्थायाहं बहुयोजनशतसहस्राणि पद्भ्यां गच्छेयं । बहुविधविधनानाप्रकारार्थपदव्यञ्जनोपायप्रातिहार्य्यैरोदपुत्सहेयं । यावन्निर्व्वाणे स्थापयेयं । यावत्समाधानवशेनाहं पञ्चमभागमायुः संस्कारानामवसृजेयं । परिनिर्व्वाणकालसमये चाहं स्वयमेव स्वशरीरसर्षपफलप्रमाणमात्रं भिन्द्यां । सत्त्वानां कारुण्यार्थं चाहं पश्चात्परिनिर्व्वापयेयं परिनिर्वृतस्य मे वर्षसहस्रं सद्धर्म्मस्तिष्ठेत् । पञ्च पुनर्वर्षशतानि सद्धर्म्मप्रतिरूपकस्तिष्ठेत् । ये च सत्त्वा मम परिनिर्वृतस्य शरीरेषु पूजोत्सुकमापद्येरन् तेषामहादेरत्नग

एकबुद्धनामैकवन्दना एकप्रदक्षिणीकारेण एकाञ्जलिकर्म्मणा एकपुष्पेण पूजां कुर्व्वीरन् सर्व्वे तेऽवैवर्त्तिका भवेयुर्यथाभिप्राया स्त्रिभिर्यानैः ये च सत्त्वा मम परिनिर्वृतस्य शासनेऽन्तश एकशिक्षापदमपि रक्षेयुर्यथोक्तं समादायवर्त्तेयुर्ये केचिच्चतुष्पदगाथां पर्य्यवाप्नुयुर्वाचयेयुः। परेषां च देशयेयुः। येऽपि शृणुयुश्चित्तं वा प्रसादयेयुर्धर्म्मभाणकस्य वा पूजां कुर्युस्तश एकपुष्पेणापि एकवन्दनेनापि सर्व्वे तेऽवैवर्त्तिका भवेयुस्त्रिभिर्यानैर्यथाभिप्राया यावत् सद्धर्म्मेऽन्तर्हिते सद्धर्म्मोल्कायां निर्व्वापितायां धर्म्मध्वजे पतिते ते च मम जन्मशरीरमवतरेयुर्यावत् काञ्चनचक्रे तिष्ठेयुर्यस्मिन्काले सहे बुद्धक्षेत्रे रत्नदुर्भिक्षं भवेत्तस्मिन्समये मेतुमसिनाममणिवैडूर्य्यमयं अग्निनिर्भासं तिष्ठन्। तच्च ततोऽभ्युद्गम्योर्द्धं यावदकनिष्ठभवने स्थित्वा विविधां पुष्पवृष्टिं प्रवर्षेत्। मान्दारवपारिजातकमञ्जूषकारो च मानचूर्णचन्द्रविमलाशतपत्रसहस्रपत्रशतसहस्रपत्रसमन्तप्रभासमन्तगन्धा सुरुचिरे सदा फुल्लाह्लादनयनाभिरम्या ज्योतिप्रभा ज्योतिरेखानन्तवर्णानन्तगन्धानां। एवं रूपाणां पुष्पवर्षमभिप्रवर्षेत् ततश्च पुष्पवर्षाद्विविधा शब्दा निश्चरेयुस्तद्यथा बुद्धशब्दो धर्म्मशब्दः सङ्घशब्द उपासकसम्वरशब्द आर्य्याष्टाङ्गसमन्वागतो पोषधोपवासशब्दो दशप्रव्रज्याशिक्षा सम्वरदानशब्दः शीलशब्दः सकलब्रह्मचर्य्यपरिपूर्णोपसम्पदाशब्दो वैयावृत्तिशब्दोऽध्ययनशब्दः प्रतिसंलयनशब्दः। योनिशोमनसिकारशब्दः शुभशब्दोऽनापानस्मृतिशब्दो नैवसंज्ञानासंज्ञायतनशब्द आकिञ्चन्यायतनशब्दो विज्ञानानन्त्यायतनशब्द आकाशानन्त्यायतनशब्दोऽभिभ्वायतनशब्दोः कृत्स्नायतनशब्दः शमथविपश्यनाशब्दः शून्यताप्रणिहितशब्दो निमित्तशब्दः प्रतीत्यसमुत्पादशब्दः सकलश्रावकपिटकशब्दश्च निश्चरेत् सकलप्रत्येकबुद्धयानपिटकशब्दो निश्चरेत्। सकलमहायानकथा षट्पारमिताशब्दः ते पुष्पा अवकिरेयुः सर्व्वे च रूपावचरा देवाः शृणुयुः स्वकस्वकानि पूर्व्वकृतानि कुशलमूलान्यनुस्मरेयुः। सर्व्वकुशलेषु धर्म्मेषु महासत्त्वा अजुगुप्सणीयास्ते ततोऽवतरेयुः सर्व्वे सहे लोकधातौ मनुष्यां देशकुशलेषु कर्म्मपथेषु नियोजयेयुः प्रतिष्ठापयेयुः। एवमेव सर्व्वे कामावचरा देवाः शृणुयुस्तेषां च तृष्णा संयोजनरतिक्रीडायोमनस्याभिरताश्चित्तचैतसिका सत्त्वान् प्रशमयेयुः। ते सर्व्वे स्वकानि पूर्व्वकृतानि कुशलमूलान्यनुस्मरेयुः। ते च देवलोकादवतीर्य्य सर्व्वे सहे लोकधातौ मनुष्यो दशकुशलेषु कर्म्मपथेषु समादापयेयुः प्रतिष्ठापयेयुः तेच पुष्पा आकाशे विविधा रत्ना प्रादुर्भवेयुः। तद्यथा भदन्त भगवन् रूप्यहिरण्यसुवर्णमणिमुक्तावैडूर्य्यशङ्खशिलाप्रवाडरजतजातरूपाश्मगर्भैः त्रिणावर्त्ताः सर्व्वे सहे बुद्धक्षेत्रे एवं रूपां रत्नवृष्टिमभिप्रवर्षयेयुः। सर्व्वे च सहे बुद्धक्षेत्रे कलिकलहविवाददुर्भिक्षरोगपरचक्रपरुषधातुवविषं सर्व्वेण सर्व्वं प्रशमयेयुः। क्षेमारोग्या अकलहोवन्धनविग्रहाः। सुभिक्षाः सर्व्वे सहे बुद्धक्षेत्रे संस्थिदेयुः। यानि च सत्त्वानि तानि रत्नानि पश्येयुः उपभोगकर्म्म वा कुर्व्वीरन्। ते सर्व्वे त्रिभिर्यानैरवैवर्त्त्या भवेयुस्ते च पुनरधो यावत् काञ्चनचक्रे स्थिदेयुः। पुरेवमेव भदन्त भगवन् शास्त्रान्तरकल्पकालसमये पुनस्ते इन्द्रनीलमणिरत्नाः संस्थिदेयुरुर्द्धं यावदकनिष्ठभवनपर्य्यन्तं स्थित्वा विविधां पुष्पवृष्टिमभिप्रवर्षयेयुः तद्यथा मान्दारवमहामान्दारवपारियात्रायावद्दिव्यानन्तप्रभासमन्तास पुष्पवर्षाद्विविधा मनोज्ञाः शब्दा निश्चरेयुः। तद्यथा बुद्धशब्दो धर्म्मशब्दः सङ्घशब्दो यावत्पूर्व्वोक्तं ते पुनः शरीरा अधोयावत् काञ्चनचक्रे स्थिदेयुः।

तस्मिन् समये दुर्भिक्षकान्तारकल्पकाले पुनस्ते शरीरा ऊर्द्धमुद्गच्छेयु यावदकनिष्ठभवन-पर्य्यन्तं पुष्पवृष्टिर्यावत् पूर्व्वोक्तं यावद्रोगान्तरकल्पं यथा पूर्व्वोक्तं । यथा भद्रके महाकल्पे मम परिनिर्वृतस्य शरीरास्तु कार्य्यं कुर्य्युः । गणनातिक्रान्तान् वैनेयां स्त्रिभिर्यानैरवैवर्त्तिकान् स्थापयेयं । एवं पञ्चबुद्धक्षेत्रपरमाणुरजःसमेमहाकल्पे वर्त्तमाने मम शरीरात्सत्त्वान् विनेयु-स्त्रिभिर्यानैरवैवर्त्तिकां स्थापयेयु यदा पश्चात्सहस्रं गङ्गा-नदी-वालिकासमैरसंख्येयैरतिक्रान्ते-र्दशसु दिक्ष्वप्रमेयैरन्योन्येभ्यो लोकधातुभ्यस्ते बुद्धा भगवन्त उत्पद्येयु ये मया बोधिसत्त्वभूतेना-नुत्तरायां सम्यक्सम्बोधौ चर्य्यां चरता प्रथममनुत्तरायां सम्यक्सम्बोधौ समादापिताः स्युः प्रतिष्ठापिता मया च पारमितासु समादापिता निवेशिताः प्रतिष्ठापिताः स्युः बोधिप्राप्त-स्याहमपि सत्त्वाननुत्तरायां सम्यक्सम्बोधौ समादापयेयं निवेशयेयं प्रतिष्ठापयेयं । ये पुनः परिनिर्वृतस्य शरीरं विकुर्व्वाणेनापि सत्त्वा अनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयेयुः तेऽपि पश्चात्सहस्रं गङ्गा-नदी-वालिकासमैरसंख्येयैर्वर्त्तमानैरसंख्येयै रतिक्रान्तैर्दशसु दिक्ष्व-प्रमेयेष्वसंख्येयेषु लोकधातुषु बोधिसत्त्वा अनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धा मम वर्णं भाषेयुः भाषयेयुर्घोषं चोदीरयेयुः यच्चिरं भद्रकोनाम कल्पो बभूव तस्मिंश्च भद्रके महाकल्पेऽनु-प्रविष्टे चतुर्थे जिनभास्कर एवं नामा तथागतो बभूव । येन वयं प्रथममनुत्तरायां सम्यक्-सम्बोधौ समादापिता निवेशिताः प्रतिष्ठापिता येन वयमेतर्हि सर्व्वज्ञाः सर्व्वकार धार्म्मिकं धर्म्मचक्रं प्रवर्त्तयामः निवर्त्तनु गतिचक्रे बहुसत्त्वकोटीनयुतशतसहस्रान् स्वर्गा-मोक्षे फले च प्रतिष्ठापयामः स्युः । ये च सत्त्वा बोध्यर्थिकास्तेषां तथागतानां सकाशे मम वर्णकीर्त्तियशः श्रुत्वा तं तथागतं पृच्छेयुः कथंवयं भवन्तमानः स भगवांस्तथागत एवं पञ्चकषाये कलियुगे वर्त्तमानेऽनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः । ते च तथागतास्तेषां बोध्यर्थिकानां कुलपुत्राणां कुलदुहितॄणां वा इमं मम करुणासमन्वागतं प्रथमचित्तोत्पादं बुद्धक्षेत्रगुणव्यूहं प्रणिधानपूर्व्वयोगं भाषेयुस्ते च बोध्यर्थिकाः कुलपुत्राः कुलदुहितरो वा आश्चर्य्यप्राप्ता भाषयेयुः तेऽप्येवं कथं महाकरुणा सत्त्वप्रतिपादयेयुरेवं रूपं च प्रणिधानं कुर्व्वीरन् । एवं रूपे तीव्रे पञ्चकषाये क्लेशकषाये कलियुगे बुद्धक्षेत्रे आनन्तर्य्यकारका पापाकुशलसम-न्वागतां वैनेयां प्रतिगृह्णीयुः ते च बुद्धा भगवन्तस्तान् महाकरुणासमन्वागता बोध्यर्थिका कुलपुत्रान् वा कुलदुहितॄन् वा एवं रूपेण व्याकरणेन व्याकुर्य्युः यथाभिप्रायैस्तैः कुलपुत्रैः कुलदुहितृभिर्वा तीव्रपञ्चकषाये क्लेशे कलियुगे प्रणिधानं कृतं । अपरे बुद्धा भगवन्तो ममाशरीरप्रवर्त्तनैभिः पूर्व्वयोगैः सत्त्वानां बोध्यर्थिकानां कुलपुत्राणां कुलदुहितॄणां वा विस्तरेण भाषेयुः । एवं चिरमेवं नामा जिनसूर्य्यो बभूव । परिनिर्वृतस्य शरीरैरेवंविधै-रेवं करुणा दुःखितानां सत्त्वानामर्थाय । एवंरूपाणि विविधानि प्रातिहार्य्याणि विविधा च नानाप्रकारा विकुर्व्वणाभिश्चैवं प्रथममनुत्तरायां सम्यक्सम्बोधौ संचोदिताः अनुत्तरायां सम्यक्सम्बोधौ वयं कुशलमूलसमाधानात् प्रथमचित्तोत्पादादिदं पारमितासु वा योगः कृतः । यावद्यथापूर्व्वोक्तं विस्तरेण ।

अथ खलु समुद्ररेणुर्ब्राह्मणोऽग्रपुरोहितो रत्नगर्भस्य तथागतस्य पुरतः स देवगन्धर्व्व-मानुषिकायाः प्रजायाः इमां महाकरुणासमन्वागतां पञ्चशतानि प्रणिधानानां कृतवान्

एवमाह । यदि मे भदन्त भगवन्नेवंरूपा आशा परिपूर्य्येत तथाचाहं अनागतेऽध्वनि भद्रके कल्पे तीव्रक्लेशे रणकषाये कलियुगे वर्त्तमानेऽन्धलोकेऽनायकेऽपरिणायके दृष्टिव्यसनान्धकारप्रक्षिप्ते लोके आनन्तर्य्यकारकाणां यावत्पूर्व्वोक्तं यदिचाहं शक्तः सकलमेवं बुद्धकार्य्यं निष्पादयितुं । यथाच मे प्रणिधानं कृतं न च विधरामिबोधौ प्रणिधानं न चान्यत्तेन-कुशलं परिणामयामि । एवमेव भदन्त भगवन् व्यवसायं न च पुनरहं अनेन कुशलमूलेन प्रत्येकबुद्धयानं प्रार्थयामि न च श्रावकयानं प्रार्थयामि न देवमनुष्यलोके राजत्वं प्रार्थयामि । न देवमनुष्यलोके ऐश्वर्य्यं प्रार्थयामि । न पञ्चकामगुणपरिभोगार्थं न देवोपपत्तिं प्रार्थयामि । न गन्धर्व्वासुर-यक्ष-राक्षस-नाग-गरुडोपपत्तिं प्रार्थयामि न चात्र कुशलमूलं परिणामयामि । यच्च भगवानेवमाह । दानं महाभोगताये संवर्त्तते शीलं स्वर्गोपपत्तये श्रुतं महाप्राज्ञताये भावनाविसंयोगाय । उक्तं चैतत्पुनर्भगवता ऋध्यति आशयोऽभिप्रायः कुशलमूलपरिणाममापुण्यवतः तच्चेद्य यच्च मया भदन्त भगवन्दानमयं वा शीलमयं वा श्रुतमयं वा भावनामयं वा पुण्यमार्जितं स्यात् यदि नैवरूपा आशा परिपूर्य्येत यथा मे प्रणिधानं कृतं तदहं तत्सर्वं कुशलमूलं नैरयिकाणां सत्त्वानां परिणामयामि । ये सत्त्वाः प्रचण्डघोरेऽवीचौ नरके दुःखान्यनुभवन्ति । ते चानेन कुशलमूलेन ततो व्युत्तिष्ठन्तु । इह च बुद्धक्षेत्रे मनुष्यप्रतिलाभं तु । तथागतप्रवेदितं च धर्म्मविनयमारागयेयुः । अग्रत्वे च परिनिर्व्वापयेयुः । यच्च तेषां सत्त्वानामपरिक्षीणकर्म्मफलं स्यात्तदहमेतर्हि कालं कृत्वा वीचौ महानरके उपपद्येयं । बुद्धक्षेत्रपरमाणुरजः समाधागामस्त्रीयाश्च मे कायाः एकैकश्च मे कायः सुमेरुपर्व्वतराजप्रमाणो महान् सम्भवेत् । एकैकश्च मे काय एवं रूपाः सुदुःखां वेदनां जानीयात् यथैतर्हि एष एकः शरीरः सुदुःखां वेदनां संजानाति । एकैकश्च मे आत्मभावो बुद्धक्षेत्रपरमाणुरजः समां तीव्राम्प्रचण्डां खरां नैरयिकां कारणामनुभवेयम् येतर्हि बुद्धक्षेत्रपरमाणुरजःसमेषु दशसु दिक्ष्वन्येषु लोकधातुषु सत्त्वा आनन्तर्य्यकारका यावदवीचिपरायणानि कर्म्माणि समुदानीतानि कुर्य्युश्च यावद्बुद्धक्षेत्रपरमाणुरजःसमेषु महाकल्पेष्वतिक्रान्तेषु । दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमेष्वन्येषु यत्रानन्तर्यकर्म्माणि क्षिपेयुः समुत्थापयेयु वा सर्वेषामपायाद्द तत्कर्म्मावीचौ महानरके स्थितोऽनुभवेयं। मा च मे सत्त्वा नरकेषूपपद्येयु सर्व्वे च ते सत्त्वा बुद्धा भगवन्त आरागमेयुः संसाराच्चोत्तारयेयुर्निर्व्वाणनगरं प्रवेशयेयुः । तदाहमेतश्चिरेण नरकात्परिमुच्येयं । यावद्दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमेष्वन्येषु बुद्धक्षेत्रेषु सत्त्वैकपारूपं कर्म्मसमुत्थापितं आविमनियतवेदनीयं प्रतापने नरके उपपत्तव्यं यावदिहापूर्वोक्तं एवं सन्तापने महारौरवे संघाते कालसूत्रे सञ्जीवने एवं नानाविधा तिर्य्यग्योनिर्वक्तव्याः एवं यमलोके वक्तव्यः एवं यसदारिद्रे वक्तव्यं । कुम्भाण्डपिशाचासुरगरुडात्राण्याः । यदा बुद्धक्षेत्रपरमाणुरजःसमेषु दशसु दिक्ष्वन्येषु लोकधातुषु सत्त्वैरेव रूपं कर्म्माचितं स्यात् ये च मनुष्यान्धबधिराङ्गिका अहस्तका अपादकाः स्मृतिप्रमुष्टचित्तैरुत्पादयितव्यं । आशुद्रिमवयितव्यं । पेयालं यथा पूर्वोक्तं । पुनरेवमाह । अवीचौ महानरके उपपद्येयं । यावच्चिरं संसारे षडायतनस्कन्धं प्रतिगृह्णीयुस्तावच्चिरमहं एवं रूपां विविधे नरकतिर्य्यक्प्रेतेषु यक्षासुरराक्षसेषु यावन्मनुष्यदुःखोपपत्तिभिरेवं दुःखमनुभवेयं यथा पूर्वोक्तं। यदि मे एवं रूपा अनुत्तरायां सम्यक्सम्बोधौ आशा न परिपूर्य्येत।

अथ च पुनर्मे एवं अनुत्तरायां मम आशा परिपूर्येत यावत्पूर्वोक्तं साक्षिभूता मे बुद्धा भगवन्तो भवन्तु। ये दशसु दिक्ष्वप्रमेयासंख्येयेषु अन्येषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति यापयन्ति धर्मं च देशयन्ति ते मम बुद्धा भगवन्तः साक्षिभूताभविष्यन्ति ज्ञानभूताभविष्यन्ति। व्याकरोतु मे भदन्त भगवन्ननुत्तरायां सम्यक्सम्बोधौ भद्रके कल्पे भवेयमहं विंशोत्तरवर्षशतायुष्कायां प्रजायां तथागतोऽर्हन् सम्यक्सम्बुद्धो विद्याचरणसम्पन्नो यावद्बुद्धो भगवान् शक्तोऽहमेवं रूपं बुद्धकार्यमभिनिष्पादयितुं या मे प्रतिज्ञा कृता।

अथ तावदेव सर्वावती पर्षत् सदेवगन्धर्वमानुषासुरश्च लोकः क्षितितलगतस्थिताः स्थापयित्वा तथागतं ते सर्वे अश्रूणि प्रवर्तयमानाः पञ्चमण्डलेन पादौ वन्दित्वाहुः। साधु साधु महाकारुणिक गम्भीरा ते स्मृतिर्गम्भीरेषु सत्त्वेषु महाकरुणोत्पन्ना गम्भीरश्च महाप्रणिधानं कृतं। तवाध्याशयेन सर्वसत्त्वा महाकरुणाया संछादिता यद्रूपमानन्तर्यकारका यावत्कुशलमूलसमवधानगता वैनेयाः प्रतिगृहीता इत्थं स प्रणिधानेन बाध्यते यथा त्वं प्रथमचित्तोत्पादेनानुत्तरायां सम्यक् सम्बोधौ सत्त्वानां भैषज्यभूतत्वार्थं परायणं सत्त्वानां दुःखप्रमोचनार्थं प्रणिधानं कृतं तथा ते आशा परिपूर्यतु व्याकरोतु च भगवाननुत्तरायां सम्यक्सम्बोधौ स्वयञ्च राजा प्रहृतं तुष्टः प्रहृष्टमानो ब्राह्मणश्च पञ्चमण्डलेन वन्दित्वाह। अहो परमगम्भीरहृदयेषु त्वमनाश्रितः सत्त्वेषु त्वं दयापन्नः। अधार्यं त्वं निरंशकः पेयालं।

अवलोकितेश्वर आह।

सत्त्वेष्वशक्तेषु भगवानसक्त अतीन्द्रियाश्च।
करोषि वैश्वर्यमिहेन्द्रियाणां भविष्यसेऽधारविज्ञानकोशं।

महास्थामप्राप्त आह।

बहुकोटि सहस्रसत्त्वानां कुशलार्थं समागताः।
इदन्ते त्वयि कारुण्यमहोपरमदुष्कर॥

मञ्जुश्रीर्बोधिसत्त्व आह।

दृढवीर्यसमाधान वरप्रज्ञा विचक्षण।
त्वमस्मानर्हसे पूजां माल्यगन्धविलेपनैः॥

गगनमुद्रोबोधिसत्त्व आह।

एवं दत्तं त्वया दानं सत्त्वेभ्यो महती कृपा।
क्षीणकालेऽस्मिं त्वं नाथ भेष्यसे वरलक्षणः॥

वज्रश्रीरत्नावभासोबोधिसत्त्वोप्येवमाह।

यथाकाशं सुविस्तीर्णमेवं त्वं करुणाश्रयः।
त्वयासत्त्वेभ्यो(ऽ)यं पन्था बोधिचर्या प्रदर्शितः॥

वैरोचनो बोधिसत्त्व आह ।

न चान्ये च यसत्त्वेषु स्थापयित्वा तथागतं ।
यस्त्वं सर्वगुणोपेतो वरप्रज्ञाविचक्षणः ॥

सिंहगन्धस्त्वाह ।

अनागते च अध्वाने भद्रके क्लेशमारके ।
यशः कीर्त्तिं समाप्नोषि सत्त्वमोचयि दुःखितान् ॥

समन्तभद्रो बोधिसत्त्व आह ।

जन्मकान्तार उद्युक्ता मिथ्यामाश्रयसङ्कटा ।
गृहीतादग्धसन्ताना मांसरुधिरभोजनाः ॥

अक्षोभ्य आह ।

अविद्या शुक्रमर्चित्ता क्लेशपङ्कसमुत्थिताः ।
गृहीता दग्धसन्ताना आनन्तर्यकारकाः ॥

गन्धहस्त्योप्याह ।

त्वमनागतभयं दृष्ट्वा यथा आदर्शमण्डले ।
गृहीता दग्धसन्तानाः सद्धर्मप्रतिक्षेपकाः ॥

रत्नकेतुरप्याह ।

ज्ञानशीलसमाधानः कृपाकरुणभूषित ।
गृहीतादग्धसन्ताना आर्याणामपवादकाः ॥

विगतभयसन्ताप आह ।

त्वं दुःखं दृष्ट्वा सत्त्वानां आपायगतिमध्वनि ।
गृहीता दग्धसन्तानाः तुच्छमुष्टीलयाश्रिताः ॥

उत्पलहस्तोप्याह ।

कृपाज्ञानेन वीर्येण पर्यात्तविमर्दिता ।
गृहीतादग्धसन्ताना जन्मामरणपीडिताः ॥

ज्ञानकीर्तिराह ।

वङ्करोगोपहताक्लेशवायुसमीरिता: ।
शमेपि ज्ञानतोयेन मारबलं प्रमर्दसि ॥

धरणीमुद्रोप्याह ।

न वीर्यं दृढमस्माभि: चीणक्लेशविमोचण ।
यथात्वं शूरसूर्येव क्लेशजालं प्रमर्दसि ॥

कमलचन्द्रोप्याह ।

दृढवीर्यमभूत्साह यथागुण कृपाश्रय: ।
मोचेसि त्वं चयं लोकं प्रबद्धं भवबन्धनै: ॥

विमलेन्द्र आह ।

महाकारुण्यनिर्दिष्ट बोधिसत्वो न गोचर: ।
वयं हि त्वां नमस्यामः कृपाहेतुसमुत्थित: ॥

बलवेगधार्यप्याह ।

क्लेशयोगे कलियुगे या बोधिस्त्वयासमाश्रिता ।
छिन्दक्लेशे समूलास्त्वं सिद्धते प्रणिधिर्दृढा ॥

ज्योतिपालोप्याह ।

ज्ञानकोशसमं तुभ्यं कृता प्रणिधि निर्मला ।
वर्तसे बोधिपर्याय सत्त्वौपधिस्त्वमाश्रय: ॥

बलसन्दर्शनो बोधिसत्वो महासत्वः प्रहस्मानो ब्राह्मणस्य पञ्चमण्डलेन पादौ वन्दित्वाञ्जलिं प्रगृहीत्वामाह ।

अहो ज्ञानोल्कासत्त्वेभ्य: क्लेशरोगविशाठनी ।
कृपालु प्रज्वालिता ते सत्त्वान् मोचेसि दुःखितान् ॥

सर्वश्रावसी च कुलपुत्र यावन्तो मदेव गन्धर्वमानुषा ब्राह्मणस्य पञ्चमण्डलेन पादौ वन्दित्वा कृताञ्जलिः स्थित्वा विविधाभिरन्वयपदयुक्ताभिर्गाथाभिस्तवि(त्वा)स्था तस्थौ यत्र च कुलपुत्र समुद्ररेणुर्ब्राह्मणो रत्नगर्भस्य तथागतस्याग्रतो दक्षिणं जानुमण्डलं पृथीव्यां प्रतिष्ठापयति ।

अथ तावदेव महापृथिवीवा(पा)लः प्रादुर्भूतः समन्ताच्च दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमेषु बुद्धक्षेत्रेषु पृथिवी चलति प्रचलति सम्प्रचलति क्षुभति प्रक्षुभति वेधति प्रवेधति सम्प्रवेधति रणति प्ररणति भरणति । पुनरपि महानवभासः ।

## प्रादुर्भूता विविधा च पुष्पवृष्टिः प्रवर्षिता ।

तद्यथा मान्दारव महामान्दारवं यावदनन्तप्रभाश्च एवंरूपा पुष्पवृष्टिः प्रवर्षितवती यद्भूयसु दिशासु बुद्धक्षेत्रे परमाणुरजस्समेषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ति यापयन्ति परिशुद्धेषु बुद्धक्षेत्रेषु अपरिशुद्धेषु वा सत्त्वानां धर्मं देशयन्ति । ये च तत्र बोधिसत्त्वा महासत्त्वास्तेषां बुद्धानां भगवतामन्तिके निषण्णा धर्मश्रवणाय ते बोधिसत्त्वा महासत्त्वास्तं पृथिवीवा(पा)लं दृष्ट्वा पुनस्ते बोधिसत्त्वास्तां भगवतः परिपृच्छन्ति । को भगवन्हेतुः कः प्रत्ययो महतः पृथिवीवा(पा)लस्य लोके प्रादुर्भावाय । महत्याश्च पुष्पवृष्टेरभिप्रवर्षणं ॥

तेन खलु पुनः समयेन पूर्वस्यान्दिशि इतो बुद्धक्षेत्राद्गङ्गा-नदी-वालिकासमानि बुद्धक्षेत्राण्यतिक्राम्य रत्नविचय नाम लोकधातुस्तत्र रत्नविचये बुद्धक्षेत्रे रत्नचन्द्रो नाम तथागतोऽर्हन् सम्यक्सम्बुद्धो भगवांस्तिष्ठति यापयति अप्रमेयेभ्यो बोधिसत्त्वेभ्यः पुरस्कृतः परिवृतो धर्मं देशयति स्म । यदुत बुद्धमहायानकथा तत्र बुद्धक्षेत्रे रत्नकेतुर्नाम बोधिसत्त्वो महारत्नकेतुश्च तौ द्वौ बोधिसत्त्वौ येन रत्नचन्द्रस्तथागतस्तेनाञ्जलिं प्रणम्य रत्नचन्द्रं तथागतमेतदवोचतां । को भदन्त भगवन् हेतुः कः प्रत्ययो महतः पृथिवीवा(पा)लस्य लोके प्रादुर्भावाय महत्याश्च पुष्पवृष्टेः प्रवर्षणतायै । रत्नचन्द्रस्तथागत आह । अस्ति कुलपुत्र पश्चिमायां दिशि इतो बुद्धक्षेत्राद्गङ्गा-नदीवालिकासमान् बुद्धक्षेत्रानतिक्रम्य तत्र सन्धीरणो नाम लोकधातुः । तत्र सन्धीरणे बुद्धक्षेत्रे रत्नगर्भस्तथागतो यावद्बुद्धो भगवांस्तिष्ठति यापयति बोधिसत्त्वकोटीर्व्याकरोत्यनुत्तरायां सम्यक्सम्बोधौ बोधिसत्त्वविषयसन्दर्शनं प्रणिधानव्यूहसमाधिविषयधारणीमुखं व्यूहं धर्मपर्यायं भाषमाणः एकश्चात्र महाकारुणिको बोधिसत्त्वो महासत्त्वस्तेनैवं रूपं प्रणिधानं कृतं महाकरुणा परिभाविता वाक् भाषिता अनुत्तरायां सम्यक्सम्बोधौ व्याकरणनिर्देशं बोधिसत्त्वानां तथारूपाप्रणिधाना उद्भाविता यद्बहुभिः प्राणकोटिभिर्बोधौ प्रणिधानं कृतं । बुद्धक्षेत्रगुणव्यूहाश्च परिगृहीता वैनेयसत्त्वाश्च परिगृहीताः । सर्वतश्च स एको महाकरुणासमन्वागतो महाबोधिसत्त्वो यः सर्वावती तां पर्येषमपि ध्रुवक्लिष्टं पञ्चकषायं क्लेशारणि कलियुगं बुद्धक्षेत्रं सर्वं आनन्तर्यकारका यावदकुशलमूलसमवधानगता दग्धसन्तानावैनेयाः परिगृहीताः सर्वावती च सापर्षत्सदेवगन्धर्वमानुषासुरश्च लोकस्तं रत्नगर्भं तथागतमुपहाय तस्य महाकारुणिकस्य पश्चिमकस्य पूजायोद्युक्ताः पञ्चमण्डलेन च वन्दित्वा प्राञ्जलीभूताः स्थितास्तस्य धर्मं भाषते । स च महासत्त्वस्तस्य भगवतो रत्नगर्भस्य तथागतस्य पुरतो निषण्णो व्याकरणं शृणुयामः । यदा च स महासत्त्वस्तस्य भगवतः पुरतो दक्षिणं जानुमण्डलं निक्षिप्तवांस्तथारूपं स्मितं प्रादुरकार्षीत् । यथा दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमा लोकधातवश्चलिताः पुष्पवर्षैश्चाभि प्रवर्षितं । सर्वत्र च तेषु बुद्धक्षेत्रेषु ते बोधिसत्त्वा महाबोधिसत्त्वाप्रबोधनार्थं महाकरुणाबोधिसत्त्वप्रणिधानचर्यानिदर्शनार्थं बोधिसत्त्वानाञ्च महासत्त्वानां

बुद्धक्षेत्रपरमाणुरजःसमेभ्यो दिग्भ्यो बुद्धक्षेत्रेभ्यः सन्निपतनार्थं बोधिसत्त्वानाञ्च महाकरुणा-समाधानमुखनिर्देशसर्वधर्मपर्यायं भाषणार्थं तेन तथागतेन एवंरूपाणि प्रातिहार्याणि द-र्शितानि । सो च कुलपुत्र द्वौ बोधिसत्त्वौ रत्नचन्द्रं तथागतं परिपृच्छतिस्म । कियच्चिरोत्पा-दितं भदन्त भगवता तेन महाकारुणिकेन बोधिसत्त्वेन महासत्त्वेन बोधिचित्तं। कियच्चिरं बोधि-चारिकां चीर्णवान् । येन पञ्चकषाये लोके तीव्रक्लेशरथे कलियुगे वर्त्तमाने काले परिगृहीतं आनन्तर्य्यकारका यावत्कुशलमूले समवधानगता दग्धसन्ताना सत्त्वा वैनेयाः परिगृहीताः ।

रत्नचन्द्रस्तथागत आह । साम्प्रतं कुलपुत्र तेन महाकारुणिकेन प्रथमचित्तमुत्पादितं । अनुत्तरायां सम्यक्सम्बोधौ गच्छत कुलपुत्र यूयं सत्सन्नीरजां बुद्धक्षेत्रं तस्य रत्नगर्भस्य तथागत-स्यार्हतः सम्यक्सम्बुद्धस्य दर्शनार्थं वन्दनाय पर्युपासनाय । तत्र समाधानमुखनिर्देशं सर्व्ववैशार-द्यधर्मपर्यायं श्रोष्यथ । तच्च महाकारुणिकं बोधिसत्त्वं महासत्त्वं मद्वचनात् पृच्छथ एवञ्च वदथ रत्नचन्द्रस्तथागतस्त्वां सत्पुरुषः पृच्छति । इदञ्च चन्द्ररोचविमलं पुष्पं प्रेषितवान् साधुकार-कुसुमञ्च एवञ्च प्रथमचित्तोत्पादेन त्वं सत्पुरुष महाकारुणिकव्याहारेण दशसु दिक्षु बुद्धक्षेत्र-परमाणुरजःसमासु लोकधातुषु बुद्धक्षेत्राणि शब्देनापूरितानि तेन त्वया सर्वत्र महाकारुणिकं नाम प्रतिलब्धं तेन त्वं सत्पुरुष साधुसुष्ठु । पश्चिमकानां महाकारुणिकानां बोधिसत्त्वानां महा-सत्त्वानां महाकरुणाव्याहारेण प्रणिधानन्वोभ्यसुपूर्णयं । न त्वं सत्पुरुष भूयो बुद्ध-क्षेत्रपरमाणुरजःसमानामतानसंख्येयान् कल्पान् बुद्धक्षेत्रपरमाणुरजःसमान्दशदिशो यशः कीर्त्तिशब्देनापूरय येन त्वया बहून्यसंख्येयशतकोटीशतसहस्राण्यनुत्तरायां सम्यक्सम्बोधौ समादापितानि निवेशितानि प्रतिष्ठापितानि भगवतःसकाशमुपनीतानि । प्रवेशितकानि स्थापितान्यनुत्तरायां सम्यक्सम्बोधौ भविष्यन्ति येषि त्वत्र प्रणिधानेन बुद्धक्षेत्रगुणव्यूहा परिगृहीष्यन्ति । ये पश्चाद्व्याकरणं लप्स्यन्ते ये त्वया बोधौ संधारयिताः सर्वे ते पश्चाद्दश-बुद्धक्षेत्रपरमाणुरजःसमासंख्येयकल्पैरन्येषु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमेषु अन्येषु लोकधातुषु ते बुद्धत्वं प्राप्य धर्म्मचक्रं प्रवर्त्तयित्वा आरभ्य यथौ भाषिष्यन्ते । अनेन तृतीयेन कारणेन त्वं साधुसत्पुरुष । तेन खलु पुनः समयेन द्वानवतिः बोधिसत्त्वकोट्य एकस्वरेण वदन्ति । वयमपि भदन्त भगवं सन्नीरजं बुद्धक्षेत्रं गच्छेमः तस्य रत्नगर्भस्य तथागतस्यार्हतः सम्यक्-सम्बुद्धस्यान्तिकं दर्शनाय वन्दनाय पर्युपासनाय तच्च सत्पुरुषं दर्शनाय वन्दनाय यस्य तथा-गतेन त्रिभिरुक्तैःसाधुकाराः प्रेषितं इमं च चन्द्ररोचविमलं पुष्पं प्रेषित । स च कुलपुत्र रत्नचन्द्रस्तथागत आह । गच्छत कुलपुत्रा यस्यैं तर्हि कालं मन्यध्वे । तत्र च रत्नगर्भस्य तथागतस्य सकाशात् समाधानमुखनिर्देशं सर्व्ववैशारद्यधर्म्मपर्यायं श्रोष्यध्वे ।

अथ तौ द्वौ कुलपुत्रौ रत्नकेतुचन्द्रकेतुश्च रत्नचन्द्रस्य तथागतस्य सकाशाच्चन्द्ररोचविमलं पुष्पं गृहीत्वा सार्द्धं द्वानवतिभिर्बोधिसत्त्वकोटिभीरत्नविचयायां लोकधातौ संप्रस्थितौ । तद्यथापि नाम विद्युता एवमेव ततो बोधिसत्त्वगणाद्विविधे विचये बुद्धक्षेत्रेऽन्तर्हितौ । इह सन्नीरजे बुद्धक्षेत्रे जम्बूवनोद्याने गन्धोद्याने च स्थितौ येन रत्नगर्भस्तथागतस्तेनोपसंक्राम-न्तावुपेत्य रत्नगर्भस्य तथागतस्य पादौ शिरसा वन्दित्वा विविधाभिर्बोधिसत्त्वविकुर्व्वणाभिः पूजां कृत्वा रत्नगर्भस्य तथागतस्याग्रतो व्याहारं दृष्ट्वा सर्व्वावतीं च बोधिसत्त्वपर्षदं प्राञ्जलो-

भूतां वर्णां भाषमाणां । तयोर्बोधिसत्त्वयोरेतदयं स महाकरुणासमन्वागतो यस्य रत्नचन्द्रेण तथागतेन मे चन्द्रोर्चविमला पुष्पाः प्रेषिताः ।

अथ तौ द्वौ बोधिसत्त्वौ भगवतः सकाशात्परिवर्तित्वा ब्राह्मणस्य पुष्पपुनर्नामयित्वा एतदे(वा)वोचतां । इमं ते सत्पुरुष रत्नचन्द्रेन तथागतेन चन्द्रोर्चविमलं पुष्पं प्रेषितं, साधुकारश्च ते सत्पुरुषः प्रेषितः । यावद्यथोक्तं पूर्वं पेयालं अप्रमेयासंख्येयेभ्यः पूर्व्वायां दिशायां बुद्धक्षेत्रेभ्यो बोधिसत्त्वा महासत्त्वाः सन्वीरवं बुद्धक्षेत्रं समागताः । चन्द्रोर्च-विमलपुष्पां गृहीत्वा ब्राह्मणस्य पुष्पाः प्रेषिताः त्रिभिर्वाक्यैः साधुकारः प्रेषितो यथा पूर्वोक्तं एवं दक्षिणायां दिशायामितो बुद्धक्षेत्राद् षष्टिमष्टितिबुद्धक्षेत्रकोटीनयुतशत-सहस्रानतिक्रमित्वा तत्र निर्युहविजृम्भितो नाम लोकधातुस्तत्र निर्युहविजृम्भितेश्वर-राजा नाम तथागतोऽर्हन् सम्यक्सम्बुद्धस्तिष्ठति यापयति शुद्धानां बोधिसत्त्वानां महासत्त्वानां शुद्धां महायानकथां धर्मं देशयति स्म । तस्मिंश्च पर्षदि द्वौ बोधिसत्त्वौ महासत्त्वौ एको ज्ञानवज्रकेतुर्नाम द्वितीयः सिंहवज्रकेतुस्तौ द्वौ बोधिसत्त्वौ महासत्त्वौ सिंहविजृम्भितेश्वरराजं तथागतं परिपृच्छतः स्म को भदन्त भगवन् हेतुः कः प्रत्ययो महतः पृथिवीचा(पा)लस्य लोके प्रादुर्भावाय महतश्च पुष्पवर्षस्य यावद्यथा पूर्वोक्तं पेयालं यावदप्रमेया दक्षिणस्यां दिशश्चान्येभ्यो बुद्धक्षेत्रेभ्योऽप्रमेया संख्येया बोधिसत्त्वकोटी-नयुतशतसहस्राः सन्वीरवं बुद्धक्षेत्रमनुप्राप्ता तावद्यथा पूर्वोक्तं । तेन खलु पुनः समयेन पश्चिमायान्दिशितो बुद्धक्षेत्रकोटीनयुतशतसहस्रबुद्धक्षेत्रानतिक्रमित्वा तत्र जयावति नाम बुद्धक्षेत्रं तत्र जितेन्द्रियविशालनेत्रो नाम तथागतस्तिष्ठति यापयति । चतुर्णां पर्षदान्त्रि-भिर्यानैर्धर्मं देशयति स्म तत्र भद्रवैरोचनो नाम बोधिसत्त्वो महासत्त्वः सिंहविजृम्भित-कायश्च । नाम द्वितीयो बोधिसत्त्वस्तौ द्वौ सत्पुरुषौ जितेन्द्रियविशालनेत्रं तथागतमेतमर्थं परिपृच्छतः कुतोऽयं महापृथिवीचा(पा)लप्रादुर्भावो महतश्च पुष्पवृष्टिप्रवर्षणस्य यावद्यथा पूर्वोक्तं । तेन खलु पुनः समयेनोत्तरस्यान्दिशितो बुद्धक्षेत्रान् कोटीनयुतशतसहस्राण्यति-क्रम्य तत्र जम्बुर्नाम लोकधातुस्तत्र लोकेश्वरराजो नाम तथागतो यावद्बुद्धो भगवान् शुद्धानां महायानसम्प्रस्थितानां बोधिसत्त्वानां शुद्धां महायानकथां धर्मं देशयति स्म । तत्र द्वौ बो-धिसत्त्वौ एकोऽचलधारी नाम द्वितीयः महाधरो नाम तौ लोकेश्वरराजं तथागतं परिपृ-च्छतः स्म को भदन्त भगवन् हेतुः कः प्रत्ययो महतः पृथिवीचा(पा)लस्य लोके प्रादुर्भावाय मह-त्याश्च पुष्पवृष्टेर्यावद्यथा पूर्वोक्तं । तेन खलु पुनः समयेनाधोदिशितो बुद्धक्षेत्राद्गङ्गानदी बुद्धक्षेत्रानयुतानतिक्रम्य तत्र विगततमोऽन्धकारो नाम लोकधातुः तत्र विगतभयपर्युत्थान-घोषो नाम तथागतस्तिष्ठति यापयति । चतुर्णां पर्षदान्त्रिभिर्यानैर्धर्मं देशयति स्म । तत्र बुद्धक्षेत्रे द्वौ बोधिसत्त्वौ महासत्त्वावेकोऽरजवैरोचनो नाम द्वितीयः स्वर्गवैरोचनो नाम याव-द्यथा पूर्वोक्तं । तेन खलु पुनः समयेनोपरिष्ठायान्दिशितो बुद्धक्षेत्राद् द्वे शतसहस्रे बुद्धक्षेत्रा-णामतिक्रमित्वा तत्र सङ्कुसुमिता नाम लोकधातुस्तत्र सङ्कुसुमिते बुद्धक्षेत्रे प्रस्फुलितकुसुम-वैरोचनो नाम तथागतो यावद्बुद्धो भगवांस्तिष्ठति यापयति चतुर्णां पर्षदान्त्रिभिर्यानैर्धर्मं देशयति स्म । तस्य बुद्धक्षेत्रे द्वौ बोधिसत्त्वौ महासत्त्वौ प्रतिभमत एकः सर्वविषयसङ्गोपित-

विषयो नाम द्वितीयोऽधारणीमुखपर्यन्तविकोपितो नाम बोधिसत्त्वौ द्वौ सत्पुरुषौ प्रफुल्लितवैरोचनकुसुमं तथागतं पृच्छन्तौ। को भदन्त भगवन् हेतुः कः प्रत्ययो यदतः पृथिवीया(पा)लस्य लोके प्रादुर्भावाय महत्याश्च पुष्पवृष्टेः।

प्रफुल्लितवैरोचनस्तथागत आह।

अस्ति कुलपुत्रा अधोदिशितो बुद्धक्षेत्रात्। द्वे गङ्गानद्यो बुद्धक्षेत्राणामतिक्रम्य। तत्र सन्धीरणो नाम लोकधातुः रत्नगर्भो नाम तथागतो यावद्बुद्धो भगवांस्तिष्ठति धर्मं च देशयति स्म। बहुसत्त्वकोट्यो व्याकरोत्यनुत्तरायां सम्यक्सम्बोधौ बोधिसत्त्वविषयसंवसमर्पणप्रणिधानविषयव्यूहसमाधिविषयधारणीमुखनिर्व्यूहं धर्मपर्यायं भाषमाण एकश्च तत्र महाकारुणिको बोधिसत्त्वो महासत्त्वः स स्वयं प्रणिधानं कृतवान् महाकरुणापरिभाविता वाचा भाषिता अनुत्तरायां सम्यक्सम्बोधौ व्याकरणनिर्देशं बोधिसत्त्वानां महासत्त्वानां यथारूपेण प्रणिधानेन उद्भाविता यथा बहुबोधिसत्त्वकोटिभिर्बुद्धक्षेत्रप्रणिधानं कृतं बुद्धक्षेत्रपूरा वैनेयसत्त्वाय परिगृहीताः स चैको महाकरुणासमन्वागतो बोधिसत्त्वः सर्वावतीं पर्षदमभिभूय क्लिष्टं पञ्चकषायं सांसारिककलियुगं बुद्धक्षेत्रं परिगृहीतं सर्वे चानन्तर्यकारका यावदकुशलसमवधानगता दग्धसन्ताना वैनेयाः परिगृहीताः सर्वावतीश्च पर्षासदेवनागयक्षासुरमानुषश्च लोको रत्नगर्भस्य तथागतस्य पूजामपहाय तस्य महाकारुणिकस्य पूजाकर्मणि उद्युक्ताः पञ्चमण्डलेन वन्दित्वा प्राञ्जलिभूताः स्थित्वा वर्णं भाषन्ते स्म। स च महासत्त्वो रत्नगर्भस्य तथागतस्य पुरतो निषण्णो व्याकरणं श्रुतवान्। यदा च तेन महासत्त्वेन तस्य भगवतः पुरतो दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठापितं तदा तेन भगवता तथारूपं स्मितं प्राविष्कृतं। यदा दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमेषु लोकधातुषु महापृथिवीषड्विकारं चलिता प्रचलिता सम्प्रचलिता कंपिता यावत्पुष्पवृष्टिः प्रवर्षिता सर्वेभ्यश्च तेभ्यो बुद्धक्षेत्रेभ्यो बोधिसत्त्वा महासत्त्वाः प्रबोधनार्थं महाकरुणा बोधिसत्त्वचर्यानिदर्शनार्थं बोधिसत्त्वा महासत्त्वा बुद्धक्षेत्रपरमाणुरजःसमेषु लोकधातुषु महापृथिवीषड्विकारश्चलिता प्रचलिता सम्प्रचलि(ता)भ्यो लोकधातुभ्यो दशभ्यो दिग्भ्यस्तत्र बुद्धक्षेत्रे सन्निपतनार्थं बोधिसत्त्वानाञ्च महासत्त्वानां समाधानमुखनिर्देशचर्यावैशारद्यं धर्मपर्यायं भाषणार्थं तेन तथागतेनैवंरूपाणि प्रातिहार्याणि दर्शितानि तौ च कुलपुत्र द्वौ बोधिसत्त्वौ महासत्त्वौ स्वविषयपर्युत्थितक्षिप्रधारणीमुखपर्यन्तविकोपितश्च तं प्रफुल्लितकुसुमवैरोचनतथागतं परिपृच्छतः स्म कियच्चिरोत्पादितं भदन्त भगवंस्तेन महाकारुणिकेन महासत्त्वेन बोधाय चित्तं कियच्चिरं वत महाकारुणिको बोधिसत्त्वो महासत्त्वो बोधिचारिकां चीर्णं येन पञ्चकषाये लोके तीव्रक्लेशराशिके कलियुगे वर्तमाने कालः परिगृहीत आनन्तर्यकारका यावदकुशलमूले समवधानगता दग्धसन्ताना वैनेयाः परिगृहीताः।

प्रफुल्लितकुसुमवैरोचनस्तथागत आह।

सम्प्रति कुलपुत्र तेन महाकारुणिकेन प्रथममनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादितं गच्छत कुलपुत्रा यूयं सन्धीरणं लोकधातुं। तस्य रत्नगर्भस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य दर्शनाय वन्दनाय पर्युपासनाय तञ्च समाधानमुखनिर्देशं चर्यावैशारद्यं धर्मपर्यायं श्रवणाय

तस्य महाकारुणिकं बोधिसत्त्वं महासत्त्वं मम वचनेन पृच्छय एवं च वक्तव्यः प्रस्फुलितवैरोचनकुसुमस्तथागतस्त्वां सत्पुरुष पृच्छते चन्द्ररोचविमलं पुष्पं प्रेषितं साधुकारश्चानुप्रदत्तः । एवं च त्वया सत्पुरुष प्रथमचित्तोत्पादेन महाकरुणाव्याहारेण दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमा लोकधातवः शब्देनापूरिताः महाकरुणाशब्दश्च प्रतिलब्धस्तेन त्वं सत्पुरुष साधुभूयः । पश्चिमकानां महाकरुणामहायानसम्प्रस्थितानां बोधिसत्त्वानां महासत्त्वानां महाकरुणाव्याहारेण प्रणिधानमैत्रीध्वजामुच्छ्रेयवसितेन त्वं सत्पुरुष साधुभूयस्त्वं सत्पुरुष बुद्धक्षेत्रपरमाणुरजःसमानागता यावदेकैककल्पबुद्धक्षेत्रपरमाणुरजःसमा दशदिशि लोकधातवो यशःकीर्त्तिशब्दैरापूरितास्तेन त्वं सत्पुरुष बहुसङ्ख्येयसत्त्वकोटीनयुतशतसहस्रा अनुत्तरायां सम्यक्सम्बोधौ समादापिताति वेगिताः प्रतिष्ठापिता भगवतः सकाशमुपनीता अवैवर्त्तिकाश्च स्थापिता अनुत्तरायां सम्यक्सम्बोधौ केचित्तत्रैव भगवतः सकाशे प्रणिधानबुद्धक्षेत्रगुणव्यूहाः परिगृहीताः वैनेयाः सत्त्वाः स्वकरुणारश्मिभिराच्छादिता ये त्वयाऽनुत्तरायां सम्यक्सम्बोधौ समादापिता न पर्योकरणप्रतिलब्धं । तेऽपि पश्चाद्व्याकरणं प्रतिलप्स्यन्ते । सर्वे ते यावद्यावद्बुद्धक्षेत्रपरमाणुरजःसमैरसङ्ख्येयैः कल्पैर्दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमेष्वन्येषु लोकधातुषु बुद्धत्वं प्राप्य धार्मिकैर्धर्मचक्रं प्रवर्त्तयित्वा त्वामेवारभ्य वर्णं भाषिष्यन्ति ।

अनेन तृतीयेन कारणेन सत्पुरुष साधु । तेन खलु पुनः समयेन बहुबोधिसत्त्वकोट्य एवमूचुर्वयमपि भदन्त भगवंस्तत्र सन्तीरणे बुद्धक्षेत्रे गच्छेम तस्य रत्नगर्भस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य दर्शनाय वन्दनाय पर्युपासनाय तस्य सत्पुरुषं दर्शनाय वन्दनाय यस्य तथागतेन त्रिभिरङ्कैः साधुकारोऽनुप्रेषित इमे च चन्द्ररोचविमलाः पुष्पाः प्रेषिताः । स च कुलपुत्र प्रस्फुलितकुसुमवैरोचनस्तथागत आह । गच्छत यूयं कुलपुत्रा यस्येतर्हि कालं मन्यध्वे । तत्र यूयं कुलपुत्रा रत्नगर्भस्य तथागतस्य सकाशात् समयधानमुखनिर्देशचर्याप्रवेशारव्यं धर्मपर्यायं श्रोष्यथ ॥

अथ खलु कुलपुत्र तौ द्वौ बोधिसत्त्वौ स्वविषयसङ्गोपितविषयश्च धारणीसंदर्शनाविकोपितस्य तस्य प्रस्फुलितकुसुमवैरोचनस्य तथागतस्य सकाशाच्चन्द्ररोचविमलां पुष्पां गृहीत्वा बहुबोधिसत्त्वकोटिभिः सार्द्धं सङ्कुसुमिताद्बुद्धक्षेत्राद् प्रस्थापिता इह बुद्धक्षेत्रे एकक्षणेन सम्प्राप्ता जम्बूवनोद्याने सस्थुयेन च रत्नगर्भस्तथागतस्तेनोपसंक्रान्ताः । तेन खलु पुनः समयेन सर्वावन्तं सन्तीरणं बुद्धक्षेत्रं एवंरूपं परिपूर्णं महायानिकैर्बोधिसत्त्वैः प्रत्येकबुद्धयानिकैः श्रावकयानिकैः कुलपुत्रैर्देवैर्यावन्मनुष्यैस्तदाऽपि नाम वेणुवनं वा शरवनं वा तिलवनं वा शालिवनं वा सम्पक्षं स्फुटं भवेत् । एवमेव तस्मिन् समये सन्तीरणं बुद्धक्षेत्रं परिपूर्णं स्फुटं महायानिकैः कुलपुत्रैर्यावन्मनुष्यैस्ते च बोधिसत्त्वा रत्नगर्भस्य तथागतस्य पादौ शिरसा वन्दित्वा विविधसमाधानबलेन बोधिसत्त्वविकुर्वितेन पूजां कृत्वा रत्नगर्भस्य तथागतस्य पुरतः आश्चर्यं दृष्ट्वा सर्वाश्चर्यगताः पर्षाः प्राञ्जलिभूताः स्थिता वर्णं भाषमाणाः तेषां बोधिसत्त्वानामेतदभवत् । अयं महाकारुणिको बोधिसत्त्वो महासत्त्वो यस्य प्रस्फुलितकुसुमवैरोचनेन तथागतेन इमे चन्द्ररोचविमलाः पुष्पा प्रेषिताः ते च बोधिसत्त्वा भगवत्सकाशात् पराहृत्य तस्य ब्राह्मणस्य ते चन्द्ररोचविमलाः पुष्पा उपनामयित्वाहुः । इमे ते सत्पुरुष प्रस्फु-

लितकुसुमवैरोचनेन तथागतेन चन्द्रोच्चविमलाः पुष्पाः प्रेषिताः साधुकारश्च मे सत्त्वबलानु-
प्रदत्तः । यावत्पूर्वोक्तं त्रिभिर्बुद्धैः साधुकारं निवेदितमिति । यानि च तानि पुष्पाणि शून्येषु
बुद्धक्षेत्रेषु प्रवर्षितानि विविधैश्च कुशलशब्दैस्तावद्बुद्धक्षेत्राण्यापूरितानि । तद्यथा बुद्ध-
शब्देन धर्मशब्देन सङ्घशब्देनावभासशब्देन पारमिताशब्देन बलशब्देन वैशारद्यशब्देन ।
अभिज्ञाशब्देनाभिसंस्कारशब्देनानुत्पादशब्देन निरोधशब्देन शान्तशब्देनोपशान्तशब्देन प्रशा-
न्तशब्देन महामैत्रीशब्देन महाकरुणाशब्देन दशसु दिशासु तेषु शून्येषु बुद्धक्षेत्रेषु तेनाव-
भासेनावभासितास्तत्र ये केचित्सत्त्वाः मनुष्या अमनुष्यास्ते सर्वे ये केचित्सत्त्वा यमसदृशाः
केचिदुदकसदृशाः केचिदग्निस्फारसदृशाः केचिद्वृक्षसदृशाः केचिच्चक्रसदृशाः केचित्पुष्प-
सदृशाः केचिद्धूमसदृशाः । केचित्सिंहसदृशाः केचित्सूर्यसदृशाः केचिच्चन्द्रसदृशाः केचि-
त्तारकसदृशाः ॥ केचिद्वृषभसदृशाः शृगालकायाः संदृश्यन्ते ।

यथारूपेण कुशलयतमनस्कारेण मे सत्त्वाः सन्निपतिता धर्मश्रवणाय । तथारूपेण
कायेन संदृश्यन्ते । तथारूपाश्च कुलपुत्र तत्र सत्त्वाः स्वकं कायं पश्यन्ति । तथारूपाश्च मे
सत्त्वा रत्नगर्भस्य तथागतस्य कायं समनुपश्यन्ति । स च कुलपुत्र समुद्ररेणुर्ब्राह्मणोऽग्रपुरो-
हितो रत्नगर्भं तथागतं पुरतः सहस्रपत्रे सप्तरत्नपद्मकेसरे निषण्णं समनुपश्यन्ति सर्वेषाम्
कुलपुत्र सत्त्वा निषण्णा वा स्थिता वा स्थितो वा । अन्तरे वा एकैकःसत्त्वो रत्नगर्भं तथा-
गतमेवं पश्यन्ति । अग्रतो रत्नगर्भस्तथागतो निषण्णोऽहं सर्वेषां समन्वाहरामि मामेवा-
रभ्य धर्मं देशयति । स च कुलपुत्र रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धः समुद्ररेणो-
र्ब्राह्मणस्य साधुकारमनुप्रदत्ता । साधु साधु महाकारुणिक महाब्राह्मण गणनातिक्रान्तानां
सत्त्वानां त्वमसि कारुणिक हितकरः प्रभासकरो लोके संदृश्यसे ॥ तद्यथापि नाम ब्राह्मण-
सम्पन्नं पुष्पक्षेत्रं नानावर्णं नानागन्धं नानास्पर्शं नानापत्रं नानापर्णं नानादण्डं नानामूलं
नानाभेषज्योपकरणं । स्थानं । केचिदत्र पुष्पा योजनशतं प्रमाणेन वर्णेन गन्धेन तपन्ति
न विरोचन्ति । केचिद्द्वियोजनशतं केचित् त्रियोजनशतं पेयालं केचिदत्र पुष्पा यावत्सर्वधातु
द्वीपिकां । लोकधातुं वर्णेन गन्धेन तपन्ति विरोचन्ति । ये च तत्र सत्त्वा चक्षुर्हीनास्ते पुष्प-
गन्धं घ्रात्वा चक्षूंषि प्रतिलभन्ते बधिराः श्रोत्राणि प्रतिलभन्ते यावत्सर्वाङ्गविहीनाः सर्वा-
ङ्गानि प्रतिलभन्ते । ये च तत्र सत्त्वाश्चतुरुत्तररोगशतोपद्रुतास्ते तं गन्धं घ्रात्वा सर्वरोगेभ्यः परि-
मुच्येयुः । ये च तत्र सत्त्वा मत्तोन्मत्तप्रमत्ताः मुषितचित्ताः विक्षिप्तचित्ताः स्मृतिप्रनष्टास्तेषां
पुष्पाणां गन्धमाघ्रात्वा सर्वे स्मृतिं प्रतिलभेयुरेवमेव तत्र मध्ये पुष्पक्षेत्रे पुण्डरीकपुष्पन्नं ।
दृढसारं वज्रमयं वैडूर्यदण्डं शतकोमलं कनकपत्रमसारगर्भकिंशुकं । लोहितं मुक्तिकेशरं
चतुरशीतियोजनसहस्राण्युच्चत्वेन । पुण्डरीकं दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमांल्लोकधातून्
वर्णेन गन्धेन स्फुरित्वा विरोचते । ये च ब्राह्मण तेषु दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमेषु
लोकधातुषु सत्त्वधातुविरुद्धाः काया व्याध्युपहता अङ्गविहीना वा मत्तप्रमत्तोन्मत्ताः मुषितस्मृति-
प्रनष्टा विक्षिप्तचित्तास्तेषां सत्त्वानां तस्य पुण्डरीकस्यावभासन्दृष्ट्वा गन्धं घ्रात्वा सर्वव्याधयः
प्रश्रम्येयुः स्मृतिश्च प्रतिलभेयुः ये च तत्र बुद्धक्षेत्रेषु सत्त्वा मृता अचिरकाले गता अग्नि-
छिन्नशरीरास्तेषां कुणपेभ्यः तस्य पुण्डरीकस्याग्रतो निपतिता गन्धेन वा स्पृष्टा पुनर्जीवेन वा

जीवितेन्द्रियं प्रतिलभेयुः ॥ पुनश्चोत्तिष्ठेयुर्मित्रबालोहितांश्च दृष्ट्वा ते सर्वे उद्यानं प्रविश्य पञ्चभिः कामगुणैः समर्पिताः समङ्गीभूता विहरेयुर्ये च पुनस्तेभ्यश्च्यवेयुस्तेषु द्वे महाविहारे उपपद्येयुः ॥

ये च तत्र चिरस्थायिनो भवेयुरपरिमितायुष्का न च तत्र मृत्वा अन्यत्रोपपद्येयुः । यथा ब्राह्मणास्त्वं पुष्पदोषमेवमयं महायानसन्निपातो द्रष्टव्यः । यथा सूर्योद्गमनकाले प्रत्युपस्थिते ते पुष्पा विकसिता प्रस्फुलिता भवन्ति । तपन्ति विरोचन्ति । केचिद्योजनशतसुखत्वेन केचिद्यावदेया जनसहस्रसुखत्वेन बहूनां सत्त्वानां विविधरोगाः प्रशमन्ति । एवमेव सत्पुरुषाः तथागतो बुद्धसूर्यो लोक उत्पादि । यथा ते पुष्पाः सूर्योदितस्य यस्य रश्मिभिर्विकसिता । भासन्ति तपन्ति विरोचन्ति विविधरोगोपहतानां सत्त्वानां रोगोपशमो भवति । एवमेवाहं सत्पुरुष लोके उत्पन्नः सत्त्वां कारुण्यरश्मिभिः छादयित्वा विकसित्वा भूयः सत्त्वांस्त्रिषु पुण्यक्रियावस्तुषु नियोजयामि त्वयाप्यप्रमेया संख्येयाः सत्त्वा अनुत्तरायां सम्यक्संबोधौ समादापिता निवेशिताः प्रतिष्ठापिता मम च सकाशमुपनीतास्तैश्च सत्त्वैर्मम सकाशे स्वकस्वकानि प्रणिधानानि कृतानि बुद्धक्षेत्राणि च परिगृहीतानि । केचित्परिशुद्धा बुद्धक्षेत्राः परिगृहीताः केचिदपरिशुद्धाः तथा चैवं मया व्याकृताः । यैः सत्पुरुषैर्मम सकाशात्परिशुद्धा बुद्धक्षेत्राः परिगृहीतास्तैः शुद्धाशयाः सुविनेया अवरुप्तकुशलमूला वैनेयाः सत्त्वाः परिगृहीता न ते बोधिसत्त्वा महासत्त्वा उच्यन्ते न च तेषां महापुरुषकार्य्यं न च तेषां महाकरुणाचित्तचेतसिकेषु प्रवर्त्तते । न च ते बोधिसत्त्वाः सर्वसत्त्वानां करुणापरीय सम्यक्संबोधिं पर्य्यैषन्ते । येऽपि ते परिशुद्धं बुद्धक्षेत्रं परिगृह्णन्ति उत्सृष्टकृपास्ते बोधिसत्त्वा ये श्रावकप्रत्येकबुद्धयानिकैः परिवर्जितं बुद्धक्षेत्रमाकाङ्क्षति । न च ते बोधिसत्त्वाः कुशलज्ञानाशयभूता येषामेवं प्रणिधानं कृतं । यथा च मेयं श्रावक बुद्धवर्जिता । अकुशलमूलसमवधानगतैर्मातृघातैर्विवर्जिते नरकतिर्यग्योनियमलोकविवर्जिते बुद्धक्षेत्रेऽनुत्तरां सम्यक्संबोधिमभिसंबुध्येयुर्महायानसम्प्रस्थितानां बोधिसत्त्वानां श्रावकप्रत्येकबुद्धपरिवर्जितां शुद्धां महायानकथा धर्मं देशयेयं बोधिप्राप्तश्चाहं दीर्घायुष्को भवेयं चिरस्थायी । बहूनि कल्पानि शुद्धाशयानां सुविनीतानां कुशलमूलसमवधानगतानां धर्मं देशयेयं । तेन ते बोधिसत्त्वा न कुशलज्ञानाशयसंभूता न महासत्त्वा उच्यन्ते । स च कुलपुत्र रत्नगर्भस्तथागतो बाहुं प्रसारयित्वा पञ्चभिरङ्गुलीभिर्नानावर्णा अनेकवर्णा अनेकशतसहस्रवर्णा रश्मयः प्रामुञ्चन् ते गत्वा रश्मयोऽप्रमेया संख्येया पूर्वस्यां दिशितो बुद्धक्षेत्रानवभासयित्वा तत्राङ्कुष्ठा नाम लोकधातुः। तत्राङ्कुष्ठायां लोकधातौ दशवर्षायुष्का मनुष्या दुर्वर्णा द्रोषोद्रिमका अकुशलमूले समवधानगता अङ्कुष्ठमात्रसुखत्वेन । तत्र ज्योतीरसो नाम तथागतोऽर्हन् सम्यक्संबुद्धः । स च कलियुगप्रमाणानां मनुष्याणां हस्तप्रमाणेन हस्तमेकं तथागत ऊर्द्धत्वेन दृश्यः । अङ्कुष्ठप्रमाणानां पुरुषाणां प्रमाणेन मत्ताङ्कुष्ठानि । स च तथागतो तिष्ठति ध्रियते यापयति चतुर्णां पर्षदां त्रिभियानैर्धर्मं देशयति ।

अथ कुलपुत्र तत्र बुद्धक्षेत्रं तांश्च मनुष्यांस्तत्र तथागतं सर्वावती च मापर्षद्दर्शीत् । रत्नगर्भस्तथागतोऽर्हन् सम्यक्संबुद्ध आह । अनेन ज्योतीरसेन तथागतेनाप्रमेयासंख्येयैः

कल्पैरतिक्रान्तैः प्रथमचित्तमुत्पादितमनुत्तरायां सम्यक्सम्बोधौ । रत्नछत्राभ्युद्गतावभासस्य तथागतस्याग्रतो बहुप्राणकोटीनयुतान्यनुत्तरायां सम्यक्सम्बोधौ समादापितानि निवेशितानि प्रतिष्ठापितानि यथाभिप्रायं सत्वैस्तस्य तथागतस्य पुरः प्रणिधानं कृतं बुद्धक्षेत्रगुणव्यूहाः परिगृहीताः परिशुद्धाः केचिदपरिशुद्धाः पञ्चकषायाः परिगृहीताः तत्र च तेन महासत्वेनाहं समादापितो निवेशितश्चानुत्तरायां सम्यक्सम्बोधौ । तत्र च मया रत्नछत्राभ्युद्गतावभासस्य तथागतस्य पुरतोऽनुत्तरायां सम्यक्सम्बोधौ पञ्चकषाये बुद्धक्षेत्रगुणव्यूहप्रणिधानं कृतं स च मे तथागतः साधुकारमदासीद् व्याकृतश्चाहमनुत्तरायां सम्यक्सम्बोधौ योऽयमस्माकं बोधाय समादापकः कल्याणमित्रो तीव्रसंस्तुतसंक्लेशपञ्चकषाये कलियुगे वर्तमाने काले प्रतिक्रुष्टं बुद्धक्षेत्रं परिगृहीतं । आनन्तर्यकारका यावत्कुशलमूलसमवधानगता इत्थसत्वाः संसाराटवीकान्तारसङ्कटप्राप्ता वैनेयसत्वे प्रणिधानं परिगृहीतमस्य सत्पुरुषस्य दशसु दिक्षु अप्रमेयासङ्ख्येयेभ्योऽन्योन्यलोकधातुभ्यस्तिष्ठन्तो यापयन्तो बुद्धा भगवन्तः साधुकारं प्रददन्तः प्रेषितवन्तो महाकरुणाविरोचनसौम्यो नाम कृतं । स च महाकरुणावैरोचनसौम्यो बोधिसत्वो महासत्वोऽस्माकं कल्याणमित्रो हितकर एकत्वं चिराभिसम्बुद्धोऽङ्कुशवत्यां लोकधातौ अकुसुमसायपुरुषाणां मध्ये तेषामेवाकुसुमप्रमाणानां पुरुषाणां हस्तप्रमाणेन हस्तप्रमाणकः स तथागतो दशवर्षायुष्कायां प्रजायां धार्मिकं धर्मचक्रं प्रवर्तितवान् तस्यापि बोधिप्राप्तस्य दशसु दिक्षु अप्रमेयासङ्ख्येयेभ्यो लोकधातुभ्यस्तिष्ठद्भिर्यापयद्भिर्लोकैर्बुद्धैर्भगवद्भिर्दूताः प्रेषिताः पूजनार्थाय ये तेन प्रथममनुत्तरायां सम्यक्सम्बोधौ समादापिता निवेशिताः प्रतिष्ठापिताः । ये तेन प्रथमं दानपारमितायां यावत् प्रज्ञापारमितायां समादापिता निवेशिताः प्रतिष्ठापितास्ते बुद्धैर्भगवद्भिः पूर्वकृतसत्समनुस्मरणमात्रैः तस्य तथागतस्य पूजाः प्रेषिताः यच्च ब्राह्मण यथा ते बुद्धा भगवन्तः सर्वेषु बुद्धक्षेत्रेषु दीर्घायुषा परिशुद्धाशयानां सुविहारिणां सत्वानां बुद्धकार्यं कुर्वन्ति । स च ज्योतिरसग्रावागत एवं प्रतिक्रुष्टे पञ्चकषाये बुद्धक्षेत्रे बुद्धत्वं प्राप्तवान् । आनन्तर्यकारकाणां यावत्कुशलमूले समवधानगतानां सत्वानामेवाल्पकेनायुषा बहुभिरेकं बुद्धकार्यं करोति । अनुत्तिमाल श्रावकाः प्रत्येकबुद्धाश्च धर्मं देशयंति । एवमेव त्वया सत्पुरुष सर्वानिमान् बोधिसत्वपर्षाभिभूय विशिष्टतरं प्रणिधानं कृतं । प्रतिक्रुष्टे बुद्धक्षेत्रे पञ्चकषाये वर्तमाने आनन्तर्यकारका यावत्कुशलमूले समवधानगता वैनेयाः सत्वाः परिगृहीताः ये च ते महासत्वा यैः परिशुद्धा बुद्धक्षेत्राः परिगृहीता नरकतिर्यग्योनिः परिवर्जिता श्रावकप्रत्येकबुद्धपरिवर्जिताः शुद्धाशयाः सुविनीता अवरुप्तकुशलमूलाः सत्वा वैनेयाः परिगृहीता इमे सत्वाः पुष्पोपमा उच्यन्ते न ते महासत्वाः पुण्डरीकोपमा ये सुविनीतानामवरुप्तकुशलमूलानां मध्ये बुद्धकार्यं करिष्यन्ति । चत्वारि ब्राह्मण बोधिसत्वानां कुसीदवस्तूनि । कतमानि चत्वारि । परिशुद्धबुद्धक्षेत्रप्रणिधानं परिशुद्धाशयानां सत्वानां बुद्धकार्यप्रणिधानं । श्रावकप्रत्येकबुद्धयानकथा बोधिप्राप्तस्य देशनाप्रणिधानं । बोधिप्राप्तस्य दीर्घायुष्कताप्रणिधानं । इमानि चत्वारि बोधिसत्वानां कुसीदवस्तूनि । येन बोधिसत्वाः पुष्पोपमा इत्युच्यन्ते न पुण्डरीकोपमा न महासत्वा इत्युच्यन्ते । तद्यथापि नाम ब्राह्मण इमान् महाबोधिसत्वपर्षां स्थापयित्वा यावद्विष्णुना येनापरिशुद्धं

बुद्धक्षेत्रं परिगृहीतं क्लेशाकुलाः सत्त्वा वैनेयाः परिगृहीता यकेभ्यो भद्रकल्पिकाः कुलपुत्राः । चत्वारीमानि बोधिसत्त्वानां महासत्त्वानामारब्धवीर्य्यवस्तूनि कतमानि चत्वारि । अपरिशुद्धक्षेत्रप्रणिधानं । अपरिशुद्धाशयानां सत्त्वानां बुद्धकार्य्यप्रणिधानं । बोधिप्राप्तस्य श्रावकप्रत्येकबुद्धयानकथादेशनप्रणिधानं । मध्यमया प्रतिपदा बोधिप्राप्तस्य नातिदीर्घता नाल्पायुष्कता प्रणिधानं । इमानि चत्वारि बोधिसत्त्वानां महासत्त्वानामारब्धवीर्य्यवस्तूनि । येन ते बोधिसत्त्वाः पुण्डरीकोपमा इत्युच्यन्ते न पुष्पोपमास्ते बोधिसत्त्वा महासत्त्वा इत्युच्यन्ते । सर्व्वथापि त्वं ब्राह्मणैतर्हि अप्रमेयानामसंख्येयानां बोधिसत्त्वानां मध्ये कुशलव्याकरणक्षेत्रं तथागतस्याग्रतः करुणापुण्डरीकमुत्पत्तेः प्रणिधानविशेषेण । यत्र त्वया आनन्तर्य्यकारका यावत्कुशलमूलसमवधानगता वैनेयाः परिगृहीतास्तीव्रं पञ्चकषायं बुद्धक्षेत्रं परिगृहीतं महाकरुणाव्याहारेण त्वं सत्पुरुष दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमैर्बुद्धैर्भगवद्भिः साधुकारो दत्तो कूटाश्च प्रेषिता महाकारुणिकस्य ते नाम कृतं सर्व्वा चेयं पर्षत्त्वैव पूजाकर्म्मण्ये उद्युक्ता । भविष्यसि त्वं महाकारुणिकानागतेऽध्वन्यतिक्रान्तानामेकगङ्गानदीवालिकासमानामसंख्येयानां परीत्तावशिष्टे द्वितीये गङ्गानदीवालिकासमे संख्येये तस्मिन्नेव सहे बुद्धक्षेत्रे भद्रके कल्पे विंशोत्तरवर्षशतायुष्कायां प्रजायां जरामरणाधिके बुद्धक्षेत्रेऽधोलोकेऽनायकेऽकुशलमूलसमवधानगते कुमार्गे विहन्यमानानां महासङ्कटप्राप्तानां सत्त्वानामानन्तर्य्यकारकाणामार्य्यापवादकानां सद्धर्म्मप्रतिक्षेपकाणां मूलापत्तिसमापन्नानां यावद्यथापूर्व्वोक्तं । आकीर्णे लोके तथागतो भविष्यसि विद्याचरणसम्पन्नो यावद्बुद्धो भगवान् विवर्त्तितगतिचक्रः प्रवर्त्तितधर्म्मचक्रः विवर्त्तितसर्व्वसंसारक्लेशभारश्च अनन्तापर्य्यन्तदशसु दिक्षु बुद्धक्षेत्राणि शब्देनापूरयित्वा महाश्रावकसंनिपातश्च ते भविष्यति । पद्युताह्वयोरग्रौ भिक्षुयती । अनुपूर्व्वेण पञ्चचत्वारिंशतिभिर्वर्षैरेवंरूपं सकलं बुद्धकार्य्यं परिपूरयिष्यसि । यथा प्रणिधानं कृतं यथा तस्मिन्समयेऽयं राजाऽमृतबुद्धोऽमितायुर्नामाप्रमेयैः कल्पैः सकलं बुद्धकार्य्यं करिष्यति । एवमेव त्वं महाकारुणिक तत्र सहे बुद्धक्षेत्रे भद्रके महाकल्पे विंशोत्तरवर्षशतायां प्रजायां पञ्चचत्वारिंशतिभिर्वर्षैरेवंरूपं सकलं महाबुद्धकार्य्यं करिष्यसि शाक्यमुनिर्नाम तथागतो भविष्यसि । परिनिर्वृतस्य च ते सत्पुरुषानुत्तरपरिनिर्व्वाणेनाधिकं वर्षसहस्रं सद्धर्म्मः स्थास्यते । सद्धर्म्मे चान्तर्हिते तव सत्पुरुष तेऽपि धातवः । तन्मशरीरे एवं रूपं बुद्धकार्य्यं करिष्यन्ति । यथा स्वयं प्रणिधानं कृतं एवं चिरं सत्त्वान् विनयिष्यसि यथा पूर्व्वोक्तं ।

तत्काले केतपूरे ब्राह्मण आसीत् स एवमाह । तेषु तेष्वप्रमेयेष्वसंख्येयेषु कल्पेषु तव सत्पुरुष बोधिचरमाणस्याहं नित्योपस्थायक उपकरणैश्चानुकूलः । सहायको भूत्वा स्यामुपतिष्ठेयं । चरमभविकस्याहं तत्र पिता भवेयं । बोधिप्राप्तस्य च ते सत्पुरुष अग्रदानपतिर्भवेयं त्वञ्च मां व्याकुर्य्यादनुत्तरायां सम्यक्सम्बोधौ । अपरा च विनीत तत्र विनीतबुद्धिर्नाम समुद्रदेवता साप्याह । तेषु तेषु यावच्चरमभविकस्याहं जनयित्री माता भवेयं । बोधिप्राप्तश्च त्वं महाकारुणिक मां कुर्य्या अनुत्तरायां सम्यक्सम्बोधौ । चक्रचारित्रनसत्रा देवता साप्याह । तेषु तेषु यावच्चरमभविकस्याहं क्षीरधात्री माता भवेयं बोधिप्राप्तस्य

मां कुर्य्या अनुत्तरायां सम्यक्सम्बोधौ। स नेमी नाम शक्रः अपरस्तु पारचिन्तीनामशक्रः ते तथैवाहुः। वयमपि भो महाकारुणिक तेषु तेषु यावद्बोधिप्राप्तस्य च ते वयं श्रावक-युगप्रभावन्तो ऋद्धिमन्तश्च भवेमः। अपरश्चारित्रचरणासुदर्शयूथिको नाम शक्रः स एव-माह। अहं ते महाकारुणिक तेषु तेषु यावच्चरमभविकस्य पुत्रो भवेयं। अपरा शिखर-देवता सौरभ्या किंशुका नाम साप्याह। अहं ते महाकारुणिक तासु तासु जातिषु भार्य्या भवेयं। बोधिप्राप्तश्च त्वं सत्पुरुष मां व्याकुर्य्या अनुत्तरायां सम्यक्सम्बोधौ कटुचरीनामा सुरेन्द्रः सोऽप्याह। अहं ते महाकारुणिक तेषु तेष्वप्रमेयासंख्येयेषु कल्पेषु सत्पुरुष बोधिचारिकाञ्चरमाणस्याह। सूपकारश्रेष्ठ्यानुकूलः सहायो रसाग्रेणोपस्थायी पश्चिमभविक-स्याह। ते उपस्थायको भवेयं बोधिप्राप्तस्य च ते सत्पुरुष धार्मिकं धर्मचक्रं प्रवर्त्तनेऽध्येषेयं अहञ्च ते धर्म्मदेशनां प्रथमां सफलां कुर्यां धर्मरसञ्च पिबेयममृतं बोधिं गच्छेयं। यावत्सर्व-ज्ञसमन्ताबुद्धत्वं प्राप्नुया। पेयालं गङ्गानदीवालिकासमास्तत्र देवनागासुरा महाकारुणि-कस्यानुप्रवर्त्तितवन्तो प्रणिधानकुशलवन्तो देवेयमुपगच्छन्त एकश्च तत्र संख्यातिकारणभीष्मो-नामा लौकिकः स आह॥ अहमपि भो ब्राह्मण बहुप्रकारस्य सहायको भविष्यामि। नियमहन्ते-ऽप्रमेयेषु कल्पेषु स फलचारिकोपजीवी यातिको भवेयं। नियतञ्च सत्त्वकायमुपसङ्क्रमेयं यस्तु-याचनार्थं ग्रासाच्छादनवस्त्रशयनग्रामनिगमनगरपुरपुत्रदुहितृभार्यारुधिरचर्म्मास्थिमांस-पाणिशिराकर्णनासानयनजीर्णानि च याचेयं। एवंरूपो त्वस्य महाब्राह्मणस्य दानपारमिता-सहायको भवेयं शीलक्षान्तिपारमितासहायको भवेयं। एवंरूपोऽहं महाब्राह्मणस्य बोधिचारि-काञ्चरमाणस्य सर्वषट्सु पारमितासु सहायको भवेयं। यावत्त्वं बोधिं प्राप्नुया अहञ्च ते श्रावक-ध्यानमासादयेयं अष्टीतिधर्म्मस्कन्धसहस्राण्युद्गृहीत्वा स्मृत्या धर्म्मदेशको भवेयं। त्वञ्च मां व्याकुर्या अनुत्तरायां सम्यक्सम्बोधौ। श्रुत्वा च कुलपुत्र महाकारुणिको ब्राह्मणो रत्नगर्भस्य तथागतस्य पञ्चमण्डलेन पादौ शिरसा वन्दित्वा तं संख्याकारभीष्मलौकिकं प्रब्वापयि-त्वाह। साधु साधु सत्पुरुष यस्त्वं मम सहायको भविष्यसि। अनुत्तरधर्मेषु यावच्च त्वं ममा-प्रमेयासंख्येयकल्पान्तरेष्वनुत्तमसंसारगहनसंक्रमेषु याचनार्थाय। सदाहं मृदुचित्तो दया कारुण्य-पुण्याशयो भवेः। भूयश्च कुलपुत्र महाकारुणिको बोधिसत्त्वो महासत्त्वो रत्नगर्भस्य तथा-गतस्य पुरत आह। स चेन्मे भदन्त भगवन्तेषु तेष्वप्रमेयेष्वसंख्येयेषु कल्पकोटीनयुतशतसह-स्रेषु अनुत्तरायां सम्यक्सम्बोधौ चारिकाञ्चरमाणस्य ये मम पुरतो याचनकाः किञ्चिद्याच्यं प्रार्थयन्ति मृदुवचनेन वा परुषवचनेन वा चण्डवचनेन वा मधुरवचनेन वा याचेयुः न चेदहं भदन्त भगवन् यावदेकक्षणमपि एकचित्तक्षणमपि रोषमुत्पादयेयं। अप्रसादं चोत्पाद-येयं। दानस्य वा फलविपाकं काङ्क्षमाणो दानन्दद्यामिति विसम्वादिता मे भवेयुः। ये प्रमेयासंख्ये-येषु दशसु दिक्षु अन्येषु लोकधातुषु बुद्धा भगवन्तस्तिष्ठन्ति ध्रियन्ति यापयन्ति धर्मञ्च देशयन्ति मायावादमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं। स चेदहं भदन्त भगवन्नाग्रृकपा-दसम्बचित्तो दानन्ददाम्यन्तशोऽपि दानप्रतिग्राहकस्य चक्षुर्दौर्मनस्यविनिपातनं। मा कुशलैर्धर्मैरन्त-रायकरम्भवेत्। अन्ततो वालाग्रकोटीप्रमाणमात्रमपि विसम्वादिता मे बुद्धा भगवन्तो भवेयुः यदिदम्पापि आह कथ वालाग्रकोटीप्रमाणमपि। कुशलेषु धर्म्मेष्वन्तरायं कुर्यं। अधम-

प्यवीचिपरायणो भवेयं । यथान्नस्य तथा वस्त्रस्य। यावन्ति याचनकाः शीर्षं याचेयुः । मृदुवचनेन वा परुषवचनेन वा उल्लुण्ठवचनेन वा श्लक्ष्णवचनेन वा शीर्षं याचेरन् । स चेदहं भदन्त भगवन् याचनकस्यान्तिके एकचित्तक्षणमपि रोषमुत्पादयेयं । अप्रसादचित्तमुत्पादयेयं दानफलविपाकसाकाङ्क्षन् शीर्षं परित्यजेयं । विसम्वादिता मे बुद्धा भगवन्तो भवेयुः । यावदहमवीचिपरायणो भवेयं । यथा दानमेवं शीलं यावत्प्रज्ञापरित्यागो वाच्यः । स च कुलपुत्र रत्नगर्भस्तथागतो महाकारुणिकस्य बोधिसत्त्वस्य महासत्त्वस्य साधुकारमदासीत् साधु साधु सत्पुरुष महाकरुणाप्रतिष्ठितेन मनसा त्वया सत्पुरुषेमं प्रणिधानं कृतं । सा च कुलपुत्र सर्व्वावती स सदेवगन्धर्व्वमानुषासुरश्च लोकः प्राञ्जलीभूतः स्थित्वा साधुकारं प्रादासीत् साधु साधु सत्पुरुष महाकरुणाप्रतिष्ठितेन मनसा त्वया सत्पुरुष प्रणिधानं त्वमपि सत्त्वां षट्परायणीयधर्मैः सन्तर्पयिष्यसि । स च कुलपुत्र यथा संज्ञाविकारभीष्माजीविको बोधिसत्त्वो दानप्रतिग्राहिकया प्रणिधानं कृतवान् एवमेव चतुरशीतिभिः प्राणिसहस्रैः प्रणिधानं कृतं । स च कुलपुत्र महाकारुणिको बोधिसत्त्वो महासत्त्वस्तान्येवंरूपाणि प्रणिधानानि चतुरशीतीनां प्राणिसहस्राणां सकाशाच्छ्रुत्वा संज्ञाविकारभीष्मेण प्रणिधानं कृतम् ।

अथ महाकारुणिकः परमप्रीतिसौमनस्यजातः प्राञ्जलीभूतः स्थित्वा सर्व्वावतीं पर्षां व्यवलोक्य पर्यन्प्रीतमना आह । अहो आश्चर्यं भविष्याम्यहं धर्मदुर्भिक्षदोषकाले महाक्लेशरणे कलियुगे पञ्चकषाये वर्त्तमाने लोकेऽनायके सार्थवाहोऽवभासकरः प्रदीपकरः अन्धानां गन्धानां मार्गनिदर्शकः यत्र हि नामाहं प्रथमचित्तोत्पादेनैवमेवंरूपामनुत्तरायां बोधिचर्यायां सहायकाः प्रतिलब्धा ये मम जन्मान्तरेषु शीर्षप्रतिग्राहका भविष्यन्ति नयनकर्णनासाजिह्वाहस्तपादवस्त्रास्थिरुधिरं यावन्मज्जा प्रतिग्राहका भविष्यन्ति । पुनरपि कुलपुत्र महाकारुणिको बोधिसत्त्वो महासत्त्वो रत्नगर्भस्य तथागतस्य पुरतो निषद्य आह । ये च मम भदन्त भगवन्तेषु तेष्वप्रमेयासंख्येयेषु कल्पकोटीनयुतशतसहस्रेषु जन्मान्तरेषु याचनका उपसंक्रामेयुर्यदि वान्नं यदि वा पानं । यावच्छिरः प्रतिगृह्णीयुस्तत्रो वालाग्रकोटीप्रमाणमात्रमपि मम हस्तदानं प्रतिगृह्णीयुर्यावद्बोधिपर्यन्तेन । स चेदहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्य न तां सत्त्वां संसारात्परिमोचयेयं । तत्र पुनर्व्याकुर्यां श्रावकयानेन वा महायानेन वा विसम्वादिता मे बुद्धा भगवन्तो भवेयुः । य एतर्हि दशसु दिक्षु यावन्मा चाहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । पुनरपि कुलपुत्र रत्नगर्भस्तथागतो महाकारुणिकस्य बोधिसत्त्वस्य महासत्त्वस्य साधुकारमदासीत्साधु साधु सत्पुरुष एवंरूपं ते सत्पुरुष बोधिचारिकाप्रणिधानं यथा मेरुशिखरिन्धरेण तथागतेन पूर्वं प्रथमचित्तोत्पादेन लोकेश्वरज्योतिषस्तथागतस्य पुरतः । एवंरूपया बोधिसत्त्वचर्यया प्रणिधानं कृतं । एवंरूपा बोधिसत्त्वचारिका चीर्णा यथा प्रणिधानं कृतं गङ्गानदीवालिकासमा महाकल्पाः । अतिक्रान्ता यथा तेन सत्पुरुषेण पुरिमायान्दिशि कोटिशतसहस्रिमे बुद्धक्षेत्रे वालप्रतिसंख्यायां लोकधातौ वर्षशतायुष्कायामनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धो ज्ञानकुसुमविरजसपुष्पबोधीश्वरो नाम बभूव तथागतोऽर्हन् सम्यक्सम्बुद्धो भगवानष्टचत्वारिंशद्वर्षाणि बुद्धकार्यं कृत्वानुपधिशेषे निर्वाणधातौ प्रविष्टः । तस्य खलु महाकारुणिकज्ञानकुसुमविरजसपुष्पबोधीश्वरस्य तथा-

गतस्य परिनिर्वृतस्य वर्षसहस्रं सद्धर्मनेत्री अस्थासीत्सद्धर्मस्य सार्धं तस्य वर्षसहस्रं पुनः सद्धर्मप्रतिरूपकमस्थासीत्।

ये खलु महाकारुणिकज्ञानकुसुमविरजसमुच्छ्रयघोषेश्वरस्य तथागतस्य परिनिर्वृतस्य सद्धर्मनेत्र्यवस्थितायां सद्धर्मप्रतिरूपका वा भिक्षुभिक्षुण्यो वा दुःशीलपापधर्माभिमुखसमुदाचाराः स्तौपिकवस्तुग्राहका लब्धिका वा धर्मपूजाच्छेदलब्धसंसृष्टा वा चातुर्दिशसङ्घस्य वा संमुखीभूतसङ्घस्य वा चीवरपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारं वा छिन्नं यो फलिकपरिग्रहे यावदात्मना परिभुक्तं। गृहस्थानां वा दत्तं। तेन खलु महाकारुणिकज्ञानकुसुमविरजसमुच्छ्रयघोषेश्वरेण तथागतेन पूर्वमनुपूर्वेण व्याकृतास्त्रिभिर्यानैः। ये केचिन्महाकारुणिक तस्य भगवतः शासने रक्तकाषायप्रावृताः सर्वे ते अवैवर्त्तिका व्याकृतास्त्रिभिर्यानैर्येऽपि केचिन्मूलापत्तिमापन्ना भिक्षुभिक्षुण्युपासिका वा पूर्वमेव ते तेन तथागतेन शास्तृसंज्ञा कुशलमूलविपाकेन त्रिभिर्यानैरवैवर्त्तिका व्याकृताः।

पुनरपरं कुलपुत्र स महाकारुणिको बोधिसत्त्वो महासत्त्वो रत्नगर्भस्य तथागतस्य पुरत आह। एवं मे भदन्त भगवन् प्रणिधिर्यावदेवाहमनुत्तरायां बोधिचर्यायां चरमाणो-याम् सत्त्वानहं दानपारमितायां नियोजयेयं। चरा स्थापयेयं प्रतिष्ठापयेयं। यावत्प्रज्ञापारमितायामन्तशो बालाग्रकोटिमात्रमपि कुशलमूले नियोजयेयं यावद्बोधिपर्यन्तेन चर्यां चरमाणो न तो सत्त्वा त्रिभिर्यानैरवैवर्त्तिकभूमौ स्थापयेयमन्तश एकसत्त्वमपि। विसंवादिता मे बुद्धा भगवन्तो भवेयुः। ये दशसु दिक्ष्वप्रमेयासंख्येयेषु लोकधातुषु तिष्ठन्ति ध्रियन्ते यापयन्ति। धर्मं च देशयन्ति। मा चाहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं। अनुत्तरज्ञानप्रतिलब्धश्चाहं भदन्त भगवन् ये सत्त्वाः शासने काषायप्रावृता भवेयुः। यदि वा मूलापत्तिमापन्नाः स्युर्यदि वा दृष्टिव्यसनं प्रतिपन्नाः स्युर्यदि वा त्रिषु रत्नेषु स्खलिताः सापराधा भवेयुर्भिक्षुभिक्षुण्युपासकोपासिका य एकक्षणमपि मम सकाशे शास्तृसंज्ञां वा गौरवचित्तमुत्पादयेयुः। स चेदहं भदन्त भगवंस्तां सत्त्वा त्रिभिर्यानैरवैवर्त्तिका न व्याकुर्यां अन्तश एक सत्त्वमपि विसंवादिता मे बुद्धा भगवन्तो भवेयुर्मा चाहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं। बोधिप्राप्तस्य च मे भदन्त भगवन्नेवमनुष्यसंस्कृतं गुरुकृतं मानितं पूजितं रक्तकाषायचीवरमभवेत्। सहदर्शनेन सत्त्वाः काषायकण्ठास्त्रिभिर्यानैरवैवर्त्तिका भवेयुः यें सत्त्वाः क्षुत्संपीडिता अन्नपानविरहिता यक्षदारिद्रेवास्तथा यामलौकिकाः सत्त्वा ये काषायमभिलषेयुरन्तशश्चतुरङ्गुलमपि सर्वे तेऽन्नपानसम्पन्ना भवेयुः परिपूर्णाभिप्रायाः ये सत्त्वाः परस्परविरुद्धवैरबहुलाः परस्परयुद्धसंग्रामगता वा देवा वा यक्षा वा राक्षसा वा नागा वा असुरा वा गरुडा वा किन्नरा वा महोरगा वा कुम्भाण्डा वा पिशाचा वा मनुष्या वा संग्रामगताः काषायमनुस्मरेयुः ते सत्त्वाः करुणाचित्ता मृदुचित्ता अवैरचित्ताः कर्मण्यचित्ता भवेयुर्ये सत्त्वाः संग्रामे वा विवादे वा युद्धे वा कलहे वा काषायखण्डकरक्षार्थं पूजनार्थं गौरवार्थं हरेयुस्ते सत्त्वाः सदा अपराजिता भवेयुरस्खलिता अविहेठिता भवेयुः स्वस्तिना ततः संग्रामाद्वा युद्धाद्वा कलहाद्वा विवादाद्वा परिमुच्येयुः। यदि मे भदन्त भगवन्निभिः पञ्चभिरार्यगुणैस्तत्काषायं न समन्वागतं भवेत्। विसंवादिता मे बुद्धा भगवन्तो

भवेयु दशसु दिक्षु शक्नुयाचाहं शक्तः सकलं बुद्धकार्यं परिनिष्पादयितुं । धर्मो मे सम्मोषकृच्छ्रेयुर्माचाहं शक्तः अन्यतीर्थिकां परिगृहीतुं । ये च भदन्त भगवन्समभिसंबुद्धस्य यावत्परिनिर्वृतस्य वा नमस्कारं करिष्यन्ति । नमः शाक्यमुनये तथागतायेति वाचं भाषिष्यन्ते तेषां सर्वकर्मावरणक्षयो भविष्यति । अन्तेवानुत्तरेण बुद्धपरिनिर्वाणेन परिनिर्वाप्स्यन्तीति स च पुनः कुलपुत्र रत्नगर्भस्तथागतो दक्षिणं बाहुं प्रसारयित्वा करतलेन महाकारुणिकस्य बोधिसत्त्वस्य शिरःपरिमार्जयित्वाह । साधुसाधु सत्पुरुष कल्याणं ते प्रणिधानं भद्रकप्रति-विमर्शं यत्रमेव ते सत्पुरुष पञ्चभिरार्यगुणैरक्तकाषायं सत्त्वानामुपजीव्यं भविष्यति । सभा पुनः कुलपुत्र महाकारुणिको बोधिसत्त्वो महासत्त्वस्तेन व्याकरणेन साधुकारमामोदप्रसादेन तथागतपुण्यशीर्षाङ्गुलिपरिघट्टादितेन दक्षिणेन मृदुतरुणकरतलसंस्पर्शेन कुमारभूतः संवृत्तो विंशद्वर्षवद्रूपो अतिसमयाणेन । पुनरपि कुलपुत्र सर्वावती सा पर्षत् सदेवगन्धर्वमानुषा प्राञ्जलीभूता तस्थौ महाकारुणिकस्य पूजाकर्मणे उद्युक्ताः पुष्पैर्माल्यैर्महाकारुणिकस्य बोधिसत्त्वस्य महासत्त्वस्य पूजां कृत्वा विविधवर्णैः श्लोकैस्तुष्टाव ॥

## इति करुणापुण्डरीके महायानसूत्रे बोधिसत्त्वे व्याकरणपरिवर्त्तश्चतुर्थः ।

---

स च पुनः कुलपुत्र महाकारुणिको बोधिसत्त्वो महासत्त्वो रत्नगर्भस्य तथागतस्य पद्ममण्डलेन पादौ शिरसा वन्दित्वा रत्नगर्भस्य तथागतस्य पुरतो निषसाद रत्नगर्भं तथागतं परिपृच्छति । समाधानमुखनिर्देशसम्भारविशुद्धिमुखो धर्मपर्यायः बोधिसत्त्वानां मार्गो भगवता निर्दिष्टः कियता भदन्त भगवन् समाधानं मुखनिर्देशसम्भारविशुद्धिमुखो धर्मपर्यायो बोधिसत्त्वानां मार्गो भगवता निर्दिष्टः । कियता भदन्त भगवन् समाधानमुखनिर्देशसम्भार-विशुद्धिमुखो धर्मपर्यायः परिपूर्णो भवति कियद्रूपेण वा भदन्त भगवन् संभारेण समन्वागतः कुलपुत्रो वा कुलदुहिता वा दृढप्रतिष्ठितो भवति कियद्रूपेण समाधानमुखनिर्देशेनाल-ङ्कृतो भवति । स भोः पुनः कुलपुत्र रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धो महाकारुणिकं बोधिसत्त्वमेतदवोचत् साधु साधु महाकारुणिक भद्रकः प्रश्नः कल्याणं ते प्रतिभानं । सुपथ्या मात्रया त्वं महाकारुणिकाप्रमेयासंख्येयानां बोधिसत्त्वानां हितकरो बहुकार्योत्पन्नो यत्र हि नाम त्वं महाकारुणिक तथागतमिदमेवंरूपं प्रश्नं परिपृष्टव्यं मन्यसे तेन हि महाकारु-णिक शृणु । साधु च सुष्ठु च मनसि कुरुष्व महायानसंप्रस्थितानां कुलपुत्राणां । अस्ति महा-कारुणिकशूरङ्गमो नाम समाधिर्यत्र समाधौ स्थितो बोधिसत्त्वः सर्वसमाधिष्वनुप्रविष्टो भवति अस्ति रत्नमुद्रो नाम समाधिर्येन सर्वसमाधयो मुद्रिता भवन्ति । अस्ति सिंह-विक्रीडितो नाम समाधिर्यत्र स्थितः सर्वसमाधिभिर्विक्रीडति । सुचन्द्रो नाम समाधिः सर्वसमाधीनवभासयति । चन्द्रध्वजकेतुः समाधिः सर्वसमाधीनां ध्वजं धारयति सर्व-धर्मोद्गतः समाधिः सर्वसमाधयोऽस्माद्गच्छन्ति विलोकितमूर्द्धो नाम समाधिः सर्वसमाधीनां मूर्ध्नं व्यवलोकयति । धर्मधातुनियतसमाधौ स्थितो बोधिसत्त्वः सर्वधर्मधातुविनिश्चयाय

गच्छन्ति। नियतध्वजकेतौ समाधौ स्थितः सर्व्वसमाधीनां ध्वजं धारयति । वज्रे समाधौ स्थितः सर्व्वसमाधीन्निर्भिनत्ति । धर्म्मप्रवेशमुद्रे समाधौ स्थितः सर्व्वधर्म्मान्मुद्रयति। समाधिराजसुप्रतिष्ठितेन समाधिना सर्व्वसमाधिषु राजत्वेन प्रतिष्ठितो भवति । रश्मिमुक्तेन समाधिना सर्व्वसमाधिषु रश्मयोऽवसरन्ति बलवीर्य्येण समाधिना सर्व्वसमाधिषु बलवीर्य्यतां कारयति । समुद्गतेन समाधिना सर्व्वसमाधिषु गच्छति । निरुक्तिनिर्द्देशेन समाधिना सर्व्वसमाधिवचनप्रवेशं प्रविशति । अधिवचनप्रवेशेन समाधिना सर्व्वसमाधीनां नामधेयामनुप्रविशति दिग्विलोकनेन समाधिना सर्व्वसमाधीनवलोकयति । सर्व्वधर्म्मप्रभेदेन समाधिना सर्व्वधर्म्मप्रभेदतामनुप्रविशति । धारणीमुद्रेण समाधिना सर्व्वसमाधीनां मुद्रान् धारयति । सर्व्वधर्म्मासम्प्रमोषेण समाधिना सर्व्वसमाधिषु विवेकधर्म्मतामनुप्रविशति अयं प्रमोषेण समाधिना सर्व्वसमाधयो न मुष्यन्ति । सर्व्वधर्म्मासङ्गेन समाधिना सर्व्वसमाधिम्वचलसाम्ये सन्तिष्ठते । सर्व्वधर्म्मसमवसरणसागरमुद्रे समाधौ सर्व्वसमाधयः समुद्रं समवसरणं गच्छन्ति सर्व्वधर्म्मासमनुत्पन्ने समाधौ सर्व्वसमाधय उभयव्ययमनूनतां गच्छन्ति । आकाशस्फरणेन समाधिना सर्व्वसमाधय आकाशे स्फरति । सर्व्वधर्म्मोच्छेदनेन समाधिना सर्व्वसमाधयोऽनुपच्छेदं गच्छन्ति । वज्रमण्डलेन समाधिना सर्व्वसमाधीनां मण्डलं धारयति । सर्व्वधर्म्मकरणेन समाधिना सर्व्वसमाधीनां रसं धारयति। रश्मिं इव समाधिना सर्व्वोपकरणक्लेशान् जहाति । सर्व्वधर्म्मानुत्पादेन समाधिना सर्व्वधर्म्मानुत्पादं निरोधं दर्शयति वैरोचनेन समाधिना सर्व्वसमाधीन् भासयति तपति विरोचति । सर्व्वधर्म्मनिरोधेन समाधिना सर्व्वसमाधीन् विभजति । अनिमिषेण समाधिना समाधयो न कश्चित् समाधिधर्म्मं पश्यन्ते निकेतन-समाधिना सर्व्वसमाधिषु न कञ्चिद्धर्म्मस्थितिं समनुपश्यति । गगनकल्पेन समाधिना सर्व्वसमाधौ गगनस्वभावता यात्वाय समनुपश्यति । निश्चितेन समाधिना सर्व्वसमाधिषु चित्तचैतसिका धर्म्माः प्रदीयन्ते । रूपपर्य्यन्तेन समाधिना रूपमवभासयति । विमल प्रदीपेन समाधिना सर्व्वसमाधीनां प्रदीपं करोति सर्व्वधर्म्मापर्य्यन्तेन समाधिना सर्व्वसमाधिषु पर्य्यन्तस्थानं दर्शयति । विद्युत्प्रदीपेन समाधिना सर्व्वसमाधिष्वपर्य्यन्तं ज्ञानं दर्शयति । सर्व्वप्रभङ्करेण समाधिना सर्व्वसमाधिषु प्रभङ्करमुखमुपदर्शयति । धातुपर्य्यन्तेन समाधिना सर्व्वसमाधीनपर्य्यन्तविज्ञापना यो यद्दर्शयति । समाधिशुद्धसारेण समाधिना शून्यतां समाधिधर्म्मेष्वनुप्राप्नोति । वैकल्पिकेन समाधिना सर्व्वधर्म्मेषु शून्यतां सन्दर्शयति । विमलप्रभेण समाधिना सर्व्वसमाधीनामलमपकर्षयति । सर्व्वधर्म्मासमभेदेन समाधिना सर्व्वसमाधीनां स्वप्रकृततां सन्दर्शयति । रतिकरेण समाधिना सर्व्वसमाधिषु रतिं प्रतिलभते । सर्व्वधर्म्मस्वभावविक्रीडितेन समाधिना सर्व्वसमाधिषु रूपानुपलब्धिं दर्शयति । विशुद्धिकरणेन समाधिना सर्व्वसमाधिष्वलक्षणत्वं दर्शयति । सर्व्वधर्म्मानिक्षेपविरजेन समाधिना सर्व्वसमाधीनां विरजं ज्ञानमुपदर्शयति । अक्षयवसे समाधिना सर्व्वसमाधीनां न क्षयं नाक्षयं दर्शयति । सर्व्वधर्म्माचिन्त्यशुद्धेन समाधिना सर्व्वधर्म्मां प्रतिभासोपमां दर्शयति । तेजोवता समाधिना सर्व्वसमाधिषु ज्ञानं ज्वालयति । क्षयापगतेन समाधिना सर्व्वसमाधीनक्षयानुगतां दर्शयति । अनिञ्जितेन समाधिना सर्व्वधर्म्मेषु नाञ्जति न वेपति न प्रपञ्चयति ।

विवर्द्धनेन समाधिना समापत्तिषु विवर्द्धमानं ज्ञेयं समनुपश्यति सूर्य्यप्रदीपेन समाधिना सर्व्वसमाधिषु रश्मिमुखान्युत्किरति । चन्द्रविमलेन समाधिना सर्व्वसमाधिष्वालोकं करोति । शुद्धप्रतिभासेन समाधिना सर्व्वसमाधिषु चतस्रः प्रतिसंविदः प्रतिलभते । कार्य्यकरेण समाधिना कार्य्यविहारक्रियां करोति ज्ञानकेतुं समनुपश्यति । वज्रोपमेन समाधिना सर्व्वधर्म्मान् निर्व्वेधीकरोति । यच्च वेधमपि न समनुपश्यति । चित्तस्थितेन समाधिना चित्तं न चलति न वेधति न प्रतिभासति न विघातमापद्यते । न चाप्येवं भवति । चित्तमेतदिति । समन्तालोकेन समाधिना सर्व्वसमाधिष्वालोकं समनुपश्यति । सुप्रतिष्ठितेन समाधिना सर्व्वसमाधिषु सुप्रतिष्ठितत्वे प्रतिष्ठति । रत्नकूटेन समाधिना सर्व्वसमाधिषु रत्नकूट इव संदृश्यते । वरधर्म्ममुद्रेण समाधिना सर्व्वसमाधयो मुद्रिता भवन्ति । धर्म्मसमतया न कश्चिद्धर्म्मं समतानिर्मुक्तं समनुपश्यति । रतिंजहेन समाधिना सर्व्वधर्म्मेषु रतिं जहाति । धर्म्मोल्केन समाधिना सर्व्वधर्म्मेष्वसमारब्धतां प्रतिलभते । असरापगतेन समाधिना सर्व्वधर्म्मेष्वेकाक्षरमपि नोपलभते । आरम्बणोच्छेदेन समाधिना सर्व्वारम्बणा व्युपच्छिन्नन्ति । अविकारेण समाधिना सर्व्वधर्म्माणां विकारं नोपलभते । प्रकृतिविशुद्धेन समाधिना सर्व्वधर्म्माणामुपक्कारं नोपलभते । अनिकेतचरेण समाधिना सर्व्वधर्म्मेषु निकेतनं नोपलभते । तिमिरापगतेन समाधिना सर्व्वसमाधितरणं न समनुपश्यति । तमोविषयं समतिक्रामति । सर्व्वगुणसञ्चयगतेन समाधिना सर्व्वधर्म्मेषु सन्निचयं जहाति । स्थितनिश्चित्तेन समाधिना सर्व्वधर्म्मेषु चित्तमिति नोपलभते । बोध्यङ्गवतेन समाधिना सर्व्वधर्म्मान् बुध्यति । स्मृतिविकरणेन समाधिना सर्व्वधर्म्मेष्वसङ्गं प्रतिभानं प्रतिलभते । सत्वरुतज्ञानविशुद्धेन समाधिना सर्व्वधर्म्मेष्वसमसमतां प्रतिलभते । ज्ञानकेतुसमाधिना सर्व्वत्रैधातुकमतिक्रामति । ज्ञानोपच्छेदसमाधिना सर्व्वधर्म्मेष्वनुच्छेदं समनुपश्यति । ज्ञानविकरणेन समाधिना सर्व्वधर्म्मेविकरणतामनुप्राप्नोति । निरधिष्ठानेन समाधिना सर्व्वधर्म्ममनाश्रयभूतं समनुपश्यति । एकव्यूहेन समाधिना न कश्चिद्धर्म्मद्वयं समनुपश्यति । आकारनिर्हारवता समाधिना सर्व्वधर्म्माणामनाकारनिर्हारं समनुपश्यति । सर्व्वाधिकारसर्व्वभवतलविकरणेन समाधिना सर्व्वधर्म्मेषु निर्वेधज्ञानं प्रविशति यस्यानुप्रवेशान्न कंचित्प्रतिलभते । सङ्केतरुतप्रवेशेन समाधिना सर्व्वरुतसङ्केतेष्वनुप्रविशति । घोषवाग्भिरक्षरविमुक्तेन समाधिना सर्व्वधर्म्मेष्वक्षरविमुक्तिं समनुपश्यति । ज्ञानोल्कामनसमाधेः सर्व्वसमाधिषु सर्व्वाकारवरोपेतो भवति । सर्व्वदुःखमुद्धर्दन समाधिना सर्व्वधर्म्मेष्वनिश्रयं समनुपश्यति । अक्षयकारण्येन समाधिना नयधर्म्मेष्वक्षयं न समनुपश्यति । अव्ययकारणेन समाधिना सर्व्वधर्म्मेष्वव्ययं न समनुपश्यति । धारणपदेन समाधिना सर्व्वसमाधीन् सर्व्वधर्म्मांश्च धारयति सम्यक्त्वमिथ्यात्वं न समनुपश्यति निरोधविधिप्रश्रमेन समाधिना सर्व्वधर्म्मानुरोधविरोधौ न समनुपश्यति । विमलप्रभासेन समाधिना सर्व्वसमाधिषु संस्कृतविमलं न समनुपश्यतीति । सारानुगतेन समाधिना सर्व्वधर्म्मेष्वसारं नोपलभते । पूर्णचन्द्रविमलेन समाधिना सर्व्वसमाधिषु गुणपरिपूर्णो भवति । महाव्यूहेन समाधिना सर्व्वसमाधिषु महाव्यूहसमन्वागतो भवति सर्व्वलोकप्रभेदेन समाधिना सर्व्वधर्म्मेषु ज्ञानेनावभासयति । समाधिसमताविरोचनेन समाधिना सर्व्वसमाधिष्वेकाग्रतां

प्रतिलभते । अरक्षेन समाधिना सर्वधर्मेषु न रज्यति अनिलनिकेतसमाधिना सर्वधर्मेष्वालयं न करोति । तथास्थितनिश्चितेन समाधिना सर्वधर्मेषु तथता न विनिवर्त्तते । कायकलिसम्प्रमथनेन समाधिना सर्वधर्मेषु सत्कायं नोपलभते । वाक्कलिविध्वंसनगगनप्रतिलब्धेन समाधिना बोधिसत्त्वः सर्वधर्मेषु वाक्कर्म नोपलभते । आकाशसंगतिविमुक्तिनिरुपलेपसमाधिस्थितो बोधिसत्त्वः सर्वधर्मेष्वाकाशसङ्गतामनुप्राप्नोति । अयं समाधिमुखो महायानसम्प्रस्थितानां बोधिसत्त्वानां निर्देशः ।

तत्र कतमो बोधिसत्त्वानां महासत्त्वानां सम्भारविशुद्धिमुखसङ्गो धर्मपर्य्यायः दानसम्भारो बोधिसत्त्वानां सत्त्वपरिपाचनतया संवर्त्तते । शीलसम्भारो बोधिसत्त्वानां प्रणिधानपूर्य्यां संवर्त्तते । क्षान्तिसम्भारो बोधिसत्त्वानां लक्षणानुव्यञ्जनपरिपूर्य्यां संवर्त्तते । वीर्य्यसम्भारो बोधिसत्त्वानां सर्वकार्य्यपरिपूर्य्यै संवर्त्तते । ध्यानसम्भारो बोधिसत्त्वानामाजनेयचित्ततया संवर्त्तते । प्रज्ञासम्भारो बोधिसत्त्वानां सर्वक्लेशपरिज्ञाया संवर्त्तते । श्रुतसम्भारो बोधिसत्त्वानामसङ्गप्रतिभानतया संवर्त्तते । पुण्यसम्भारो बोधिसत्त्वानां सर्वसत्त्वोपजीव्यतया संवर्त्तते । ज्ञानसम्भारो बोधिसत्त्वानामसङ्गज्ञानतया संवर्त्तते । शमथसम्भारो बोधिसत्त्वानां कर्मण्यचित्ततया संवर्त्तते विपश्यना सम्भारो बोधिसत्त्वानां विगतकथंकथया संवर्त्तते । मैत्रीसम्भारो बोधिसत्त्वानां अप्रतिहतचित्ततया संवर्त्तते । करुणासम्भारो बोधिसत्त्वानां अपरिखेदतायै संवर्त्तते । मुदितासम्भारो बोधिसत्त्वानां धर्मे रामरतिरमणतायै संवर्त्तते । उपेक्षासम्भारो बोधिसत्त्वानामनुनयप्रतिघप्रहाणाय संवर्त्तते । धर्मश्रवणसम्भारो बोधिसत्त्वानां निवरणप्रहाणाय संवर्त्तते । नैष्क्रम्यसम्भारो बोधिसत्त्वानां सर्वपरिग्रहोत्सर्गाय संवर्त्तते अरण्यवाससम्भारो बोधिसत्त्वानां कुशलकर्माविप्रणाशतया संवर्त्तते । स्मृतिसम्भारो बोधिसत्त्वानां धारणीप्रतिलाभतया संवर्त्तते । मतिसम्भारो बोधिसत्त्वानां बुद्धिप्रभेदनतया संवर्त्तते । गतिसम्भारो बोधिसत्त्वानामर्थगत्यनुबुध्यनतया संवर्त्तते । स्मृत्युपस्थानसम्भारो बोधिसत्त्वानां कायवेदनाचित्तधर्मानुबुध्यनतया संवर्त्तते । सम्यक्प्रहाणसम्भारो बोधिसत्त्वानां सर्वाकुशलधर्मप्रहाणतायै संवर्त्तते । सर्वकुशलधर्मभावनाय च ऋद्धिपादसम्भारो बोधिसत्त्वानां कायचित्तलघुत्वतया संवर्त्तते । इन्द्रियसम्भारो बोधिसत्त्वानां सर्वसत्त्वेन्द्रियपरिपूर्य्यां संवर्त्तते । बलसम्भारो बोधिसत्त्वानां सर्वक्लेशानवमर्दनतया संवर्त्तते । बोध्यङ्गसम्भारो बोधिसत्त्वानां धर्मस्वभावानुबुध्यनतया संवर्त्तते । मार्गसम्भारो बोधिसत्त्वानां सर्वकुमार्गसमतिक्रमतायै संवर्त्तते । सत्यसम्भारो बोधिसत्त्वानामकुशलधर्म्मालम्बनवचनैर्व्यवस्थापितलक्षणाय संवर्त्तते । प्रतिसंविज्ञासम्भारो बोधिसत्त्वानां सर्वसत्त्वसंशयच्छेदनतया संवर्त्तते । प्रतिशरणसम्भारो बोधिसत्त्वानामपराधीनज्ञानतया संवर्त्तते । कल्याणमित्रसम्भारो बोधिसत्त्वानां सर्वगुणाय द्वारतया संवर्त्तते । आशयसम्भारो बोधिसत्त्वानां सर्वलोकाविसम्वादनतया संवर्त्तते । प्रयोगसम्भारो बोधिसत्त्वानां सर्वसम्भारोसारतया संवर्त्तते । अध्याशयसम्भारो बोधिसत्त्वानां विशेषगामितया संवर्त्तते । प्रतिसंलानसंभारो बोधिसत्त्वानां यथाभूतधर्मप्रतिपत्त्या संवर्त्तते । सद्धर्मवस्तुसम्भारो बोधिसत्त्वानां सत्त्वपरिपाचनतया संवर्त्तते । सद्धर्मपरिग्रहसम्भारो बोधिसत्त्वानां त्रिरत्नवंशानुपच्छेदनतया

संवर्त्तते। परिणामना विविधज्ञकौशल्यसम्भारो बोधिसत्त्वानां बुद्धक्षेत्रपरिशुद्ध्यै संवर्त्तते। उपायकौशल्यसम्भारो बोधिसत्त्वानां सर्व्वज्ञज्ञानपरिपूर्य्यै संवर्त्तते।

अयं कुलपुत्र बोधिसत्त्वानां सम्भारविशुद्धिमुखो धर्म्मपर्य्यायः। पुनरपि कुलपुत्ररत्नगर्भस्तथागतो महाबोधिसत्त्वपर्षदं अवलोक्य महाकारुणिकं बोधिसत्त्वं महासत्त्वमामन्त्रयित्वाह। तत्र महाकारुणिकः कियद्रूपेण वैशारद्यालङ्कारेणालङ्कृतो बोधिसत्त्वो महासत्त्वः क्षान्तिं परिपूरयति। परमार्थदर्शिनो बोधिसत्त्वस्य महासत्त्वस्यामोघव्यायामपरिग्रहचित्तः। सर्व्वत्रैधातुकेभ्यो परिग्रहचित्तः सर्व्वसत्त्वेभ्यः स उच्यते महावैशारद्यप्रशमनधर्म्मा यथाकाशायापि समचित्तं सर्व्वधर्म्मेषु। अयं महाकारुणिक-बोधिसत्त्वस्य वैशारद्यालङ्कारः॥

कथञ्च पुनः क्षान्त्यापरिपूरिर्भवति। अणुरपि तत्र धर्म्मं नोपलभते यस्तुष्येयुः प्रतिहुध्येयुर्वा अविपाकधर्म्मानधिमुच्यते। यदुत मैत्र्याचैव नैरात्म्यञ्च करुणा च निःसत्त्वता च मुदितानि जीविता चोपेक्षा च निष्पुद्गलता च दानं च दान्तचित्तता च शीलं च शान्तचित्तता च क्षान्तिश्च क्षमाचित्तता च वीर्य्यं च विवेकचित्तता च ध्यानं च निध्याप्तिचित्तता च प्रज्ञा चाप्युदारचित्तता च स्मृत्युपस्थानता च स्मृत्यमनसिकारचित्तता च सम्यक्प्रहाणं चानुत्पादनिरोधचित्तता च ऋद्धिपादाश्च श्रद्धा चासङ्गचित्तता च स्मृतिश्च स्वयम्भूचित्तता च समाधिश्च समापद्यानुचित्तता च। प्रज्ञेन्द्रियं चातीन्द्रियचित्तता च बलं च भयमर्षचित्तता च बोध्यङ्गाश्च बुद्धिप्रभेदनचित्तता च मार्गाश्च भावनाचित्तता च। शमथशोपशमचित्तता च विपश्यता च सम्मोहचित्तता च आर्य्यसत्यभावना चात्यन्तपरिज्ञाभावनाचित्तता च। बुद्धमनसिकारश्चाप्यकारचित्तता च धर्म्मसमनसिकारश्च धर्म्मधातुसमाचित्तता च सङ्घमनसिकारश्चाप्रतिष्ठितचित्तता च। सत्त्वपरिपाचनादिविशुद्धिचित्तता च। सर्व्वधर्म्मपरिग्रहश्च धर्म्मधात्वधर्म्मेश्चित्तता च। क्षेत्रपरिशुद्धिश्चाकाशसमचित्तता च। लक्षणपरिपूरिश्चालक्षणचित्तता च। क्षान्तिप्रतिलाभश्चानुपलम्भचित्तता च। अवैवर्त्तिकभूमिश्च संवर्त्तानिवर्त्तचित्तता च। बोधिमण्डालङ्कारचित्तं च त्रैधातुकमण्डलचित्तता च। मारधर्षणचित्तं च सर्व्वसत्त्वेभ्यः सर्व्वसत्त्वानुग्रहचित्तता च बोधिश्च सर्व्वधर्म्मसमता च बोधिचित्तता च धर्म्मचक्रप्रवर्त्तनं च सर्व्वधर्म्मं च सर्व्वधर्म्मप्रवर्त्तनचित्तता च। महापरिनिर्व्वाणसन्दर्शनं च संसारस्वभावचित्तता च। अस्मिन्धर्म्मपर्य्याये भाष्यमाणे चतुःषष्टीनां बोधिसत्त्वशतसहस्राणां ये इतश्च्यो दिग्भ्यो गृध्रकूटे पर्व्वते शाक्यमुनेस्तथागतस्यान्तिके पूर्व्वयोगसमाधानमुखनिर्द्देशं संभारविशुद्धिमुखधर्म्मपर्य्यायं श्रवणार्थमागतास्तेऽनुत्पत्तिकेभ्यो धर्म्मेभ्यः क्षान्तिः प्रतिलब्धा॥

शाक्यमुनिस्तथागत आह॥

अथ खलु पुनः कुलपुत्र धर्म्मपर्य्यायस्य रत्नगर्भस्य तथागतस्यार्हतः सम्यक्सम्बुद्धस्य भाषमाणस्याष्टचत्वारिंशतीनां गङ्गा-नदी-बालिकासमानां बोधिसत्त्वानां महासत्त्वानामनुत्पत्तिकधर्म्मक्षान्तिप्रतिलाभोऽभूत्। चातुर्द्वीपिकलोकधातुपरमाणुरजःसमैर्बोधिसत्त्वैर्महासत्त्वैरवैवर्त्तिकभूमिः प्रतिलब्धा बभूव। गङ्गा-नदी-बालिकासमानां बोधिसत्त्वानां महासत्त्वानामस्य समाधानमुखनिर्द्देशस्य सम्भारविशुद्धिमुखधर्म्मपर्य्यायस्य सकलपरिपूर्णविदग्धत्वानाधिगमो बभूव। स च कुलपुत्र महाकारुणिको बोधिसत्त्वो महासत्त्वस्तेन प्रामोद्य-

प्रसादेन विंशतिवर्षसहस्राः कुमारभूतः संवृत्तो रत्नगर्भस्य तथागतस्य पुरुषः स्यात् । स च कुलपुत्र राजाम्बरशुद्धः सार्द्धं ... द्वानवतिभिः प्राणकोटिभिः सार्द्धं निष्क्रम्य प्रव्रजितः शीले भूतसमाधिसौरभ्यैरभियोगमुक्तवान् । स च कुलपुत्रमहाकारुणिको बोधिसत्त्वो महासत्त्वोऽनुपूर्वेण चतुरशीतिधर्मस्कन्धसहस्राणि रत्नगर्भस्य तथागतस्य सकाशाच्छ्रावकयानकथां पठितवान्पर्यवाप्तवांश्च नवतिधर्मस्कन्धसहस्राणि प्रत्येकबुद्धयानकथायामुद्दिष्टवां पठितवान्पर्यवाप्तवान् । ततः षट्कसानुत्तरमहायानकथायां । तथाकायस्मृत्युपस्थानकथामुद्दिष्टवान् । पठितवान् पर्यवाप्तवांश्च शतसहस्रं वेदनास्मृत्युपस्थानकथायां शतसहस्रं चित्तस्मृत्युपस्थानकथायां । शतसहस्रं धर्मस्मृत्युपस्थानकथायामुद्दिष्टा पठिता पर्यवाप्ताश्च शतसहस्रं धातुस्कन्धकथा । शतसहस्रमायतनस्कन्धकथां । शतसहस्रं रोगसंयोजनमहास्कन्धकथां । शतसहस्रं दोषसंयोजनमहास्कन्धकथां । शतसहस्रं मोहमहाप्रतीत्यसमुत्पादस्कन्धकथां । शतसहस्रं समाधिविमोक्षस्कन्धकथां । शतसहस्रं वैशारद्यावेणिकबुद्धधर्मस्कन्धकथामुद्दिष्टवान् पठितवान् पर्यवाप्तवांश्च । यावद्दशधर्मस्कन्धशतसहस्रं रत्नगर्भस्य तथागतस्य सकाशादुद्गृहीतवान् पठितवान्नाप्तवांश्च । यावदपरेण कालसमयेन रत्नगर्भस्तथागतोऽर्हन् सम्यक्सम्बुद्धोऽनुपधिशेषे निर्वाणधातौ परिनिर्वृतः ।

स च कुलपुत्र महाकारुणिको बोधिसत्त्वः नानाविधाप्रमेयासङ्ख्याया वाद्यपुष्पचूर्णमाल्यगन्धविलेपनछत्रध्वजपताकाभिः पूजां कृतवान् । नानागन्धैश्च स्नापनं कृतवान् । शरीरप्रतिष्ठापनञ्च सप्तरत्नमयं स्तूपं कृतवान् । पञ्चयोजनमुच्चत्वेन अर्धयोजनं विस्तारेण ततः सप्तदिवसान्यप्रमेयासङ्ख्येया वाद्यपुष्पमाल्यगन्धविलेपनछत्रध्वजपताकाभिश्च पूजां कृत्वा पुनरपि तस्याप्रमेयासङ्ख्येयास्त्रिषु यानेषु समादापिता निवेशिता प्रतिष्ठापिताः च तेषां सत्त्वानां शिक्षणनामधेयेन चतुरशीतिभिः प्राणसहस्रैः सार्द्धं निष्क्रम्य केशश्मश्रूण्यवतार्य काषायाणि वस्त्राण्याच्छाद्य सम्यगेव श्रद्धयागाराऽनगारिको प्रव्रज्य रत्नगर्भस्य तथागतस्य परिनिर्वृतस्य शासनं ज्वा(पा)लितवान् । दशवर्षसहस्राणि सद्धर्मधारको बभूव । तत्र चाप्रमेया सङ्ख्येयाः सत्त्वास्त्रिभिर्यानैः समादापयामास निवेशयामास प्रतिष्ठापयामास । त्रिशरणगमने च प्रतिष्ठापयामास । उपासकसंवरे च श्रामणेरसंवरे उपसम्पदायां भिक्षुभावे ब्रह्मचर्यवासंवरे निवेशिताः प्रतिष्ठापिताः च बहूनि प्राणकोटीनियुतशतसहस्राणि अभिज्ञर्द्धिकौशल्ये च नियोजयित्वा सौरभ्यब्रह्मचर्यवासे नियोजयित्वा अष्टधुतेषु च स्कन्धेषु परिज्ञायां नियोजयित्वा शून्यग्रामायतनपरिज्ञायां नियोजयित्वा प्रतीत्यसमुत्पन्नाः सर्वधर्माः संस्कृतज्ञानपरिज्ञायां नियोजयित्वा प्रतिभासोऽश्मानमरीच्युपमानुदकचन्द्रोपमान् सर्वधर्मान्दर्शयित्वानुत्पादानिरोधा प्रतिसन्धिनिरोधशान्तप्रशान्तोपशान्तपरमप्रणीतनिरोधनिर्वाणपरिज्ञानं दर्शयित्वा आर्याष्टाङ्गं मार्गं प्रतिष्ठापयित्वा कालं कृतवान् ।

एवमेव च ते सत्त्वास्तस्य महाकारुणिकस्य महाश्रमणस्य शरीरेषु शरीरपूजां कृतवन्तो यथा राजचक्रवर्त्तिनः शरीरेषु शरीरपूजा क्रियते । एवमेव तस्मिन्समये ते सत्त्वा महाकारुणिकस्य महाश्रमणस्य शरीरेषु शरीरपूजां कृतवन्तो यस्मिंश्च दिवसे महाकारुणिको

महाश्रमणः कालगतस्तस्मिन्दिवसे रत्नगर्भस्य तथागतस्य सद्धर्मोऽन्तर्हितस्तैश्च बोधिसत्त्वैर्महासत्त्वैः प्रणिधानवशेनान्यत्र लोकधातुषूपपत्तिः। केचित्प्रणिधानवशेन तुषितभवन उपपन्नाः। केचिन्मनुष्येषु केचिन्नागेषु केचिदसुरेषु केचित्प्रणिधानेन विविधासु तिर्यग्योनिषूपपन्नाः। कालगतश्च कुलपुत्र महाकारुणिको महाश्रमणः प्रणिधानवशेन दक्षिणायां दिशायामितो बुद्धक्षेत्राद्दशसु बुद्धक्षेत्रसहस्रेष्वतिक्रम्य तत्र सङ्कर्षणो नाम लोकधातुरशीतिवर्षायुष्काश्च तत्र मनुष्या अकुशलमूला समवधाना रौद्रा लोहितपाणयः पापनिविष्टा अदयापन्नाः सर्वसत्त्वेषु। अमातृज्ञा अपितृज्ञा अपरलोकभयादर्शिनः प्रणिधानवशेन महाकारुणिको महाश्रमणस्तत्र सङ्कर्षणे बुद्धक्षेत्रे चण्डालकुल उपपन्नोऽभूत् स चातीवदृढशरीरोऽभूदतीवबलवानतीवस्मृतिमानतीवप्रतिभानवानतीवबलसमगतोऽभूत् स दृढेन बलवेगेन सत्त्वान् संगृहीत्वाह। यदि यूयम्भो सत्त्वा अदत्तादानात् प्रतिविरमत कामिमिथ्याचाराद्यावन्मिथ्यादृष्ट्याः प्रतिविरमत तदहं युष्माकं जीवितं प्रयच्छामि जीवितोपकरणानि च दास्यामि।

अथ च पुनर्न प्रतिविरमत। अहं जीविताद्व्यपरोपयित्वा प्रक्रमिष्यामि। ततस्ते सत्त्वा अञ्जलिं प्रगृह्याहुः। वयमिदानीं तव नायक वचनेनाद्याग्रेण यावज्जीवमदत्तादानाद्यावन्मिथ्यादृष्ट्याः प्रतिविरमामः। स बलचण्डालो गत्वा राज्ञो वा राजभट्टानां वा निवेदयति। जीवितोपकरणेन मे प्रयोजनमन्नेन वा पानेन वा खाद्येन वा भोज्येन वा पेयवस्त्रशय्यासनगन्धहिरण्यसुवर्णमणिमुक्तिवैडूर्यशङ्खशिलाप्रवाडरजतजातरूपेण वा प्रभूतानि जीवितोपकरणानि ददत मम बलचण्डालः सत्त्वां यावज्जीवं दशसु कुशलेषु कर्मपथेषु प्रतिष्ठापयामास। ततस्ते मनुष्याः पञ्चशतायुष्का बभूवुः। यत्र तत्र राजा अकालगतः ततस्तैराजामात्यैः सबलः चण्डालो राजाभिषेकेनाभिषिच्य राज्ये प्रतिष्ठापितो पुण्यबलो नाम संस्कृतः॥

अथ कुलपुत्र राजा पुण्यबलो न चिरेणैव तं विषयमनुशासितवान् दृढवीर्यपराक्रमेण द्वितीयं विषयं समनुशासितवान्। यावद्राजा पुण्यबलेन चिरेण सर्वजम्बूद्वीपे राजा बलचक्रवर्ती बभूव। यदा च राज्ञा पुण्यबलेन सर्वजम्बूद्वीपे राजत्वं प्रतिगृहीतं ततः पश्चात् सत्त्वाः प्राणातिपातविरमणे समादापिता निवेशिताः प्रतिष्ठापिताः। एवमदत्तादानाद्यावन्मिथ्यादृष्टिवैरमणे समादापिता सम्यग्दृष्ट्यां प्रतिष्ठापिता यथाभिप्रायाः सत्त्वास्त्रिषु यानेषु समादापिता निवेशिताः प्रतिष्ठापिताः॥

अथ राज्ञा पुण्यबलः सर्वजंबूद्वीपिकां सत्त्वां दशकुशलेषु कर्मपथेषु प्रतिष्ठापयित्वा त्रिषु यानेषु सन्निपात्य सर्वजंबूद्वीपे घोषमनुश्रावयामास। ये केचिद्याचनका अन्नार्थिका पानद्रव्यार्थिका वा ते सर्वे आगच्छन्तु। अहं सर्वदानानि दास्यामि ततो अपरेण कालसमयेन सर्वजंबूद्वीपिकाः सत्त्वा आगत्य राजानं पुण्यबलं याचितवन्तः राजापि पुण्यबलस्तान्यारभ्य विविधानि दानानि दत्तवान्। तत्र पांशुघोषो नाम जीवको राजानं पुण्यबलमुपसंक्रम्याह। यदि त्वं महाराज विविधं महादानपतित्वं परित्यजसि। अनुत्तरायां सम्यक्सम्बोधिमाकाङ्क्षसि यदि त्वं महाराज समाशो परिपूरयिष्यसि त्वं महाराज लोकप्रदीपो जिन इति।

राजाह । केन हेतोः । पांशुघोष आजीविक आह । अहं महाराज महासुरसंग्रामप्रमर्दनकल्पं साधयितुं । तेनाहं तत्र पुरतः स्थित्वा विज्ञापयामि । पुरुषस्य चर्मणा प्रयोजनं चक्षुषा च प्रयोजनं ॥

अथ कुलपुत्र राजा पुण्यबल एवं चिन्तयति । प्रतिलब्धं मया बलचक्रवर्तित्वमसं गणनातिक्रान्ताश्च सत्त्वा दशकुशलेषु कर्मपथेषु प्रतिष्ठापितास्त्रिषु च यानेषु नियोजिता अप्रमेयं च मे दानं दत्तं । अयश्च मे कल्याणमित्रोऽसारात् कायात्सारमाददामि । स राजाह । तुष्टो भव ददामि ते इमं प्राकृतमांसचक्षुस्तेनाहं लभेयानुत्तरं धर्मचक्षुः । ददामि ते इमं छवं चर्म प्रसन्नचित्तेन चाहं लभेयानुत्तरां सम्यक्सम्बोधिं ॥

अथ कुलपुत्र राजा पुण्यबलो दक्षिणेन हस्तेनात्मनो नेत्रमुत्पाट्याजीविकस्य दत्वारु-धिरम्रक्षितेन मुखेनाह । शृण्वन्तु मे इह देवयक्षमहर्द्धिका ये केचिन्नरा ये सुरा ये च भूता इहागताः खेचरा भूमौ स्थिता ये नरा बोधाय मया दानं नामितं शुभं प्राप्येऽहं शान्तं पदं । सत्त्वांस्तारयेयं । घोरात् संसारार्णवाद्घोरेऽनुत्तरे निर्वाणे शिवे स्थापयेयं । पुनराह यावद-नुत्तरां सम्यक्सम्बोधिं प्राप्नुयां तावच्चिरं मम जीवितेन्द्रियं मा निरुध्येत मा च मे स्मृतिर्भ्रंशं मा च मे विप्रतिसारो भवेद्यावच्चिरमस्य जीविकस्य वा चिन्ता न चित्ता भवेत् । आह । गृहाण चर्म । स च कुलपुत्र पांशुघोषाजीविकस्तीक्ष्णं शस्त्रं गृहीत्वा राज्ञो शिरसः कायाच्चर्ममपनेत्वा चर्मगृहीत्वा छिद्रां साधयित्वा तथा मसङ्कियमानि राज्ञः पुण्य-बलस्य जीवितेन्द्रियं न निरुद्धं न च स्मृतिः प्रमुष्टा न च तां दुःखां वेदनां वेदयति न चास्यैकक्षणमपि विप्रतिसारो जातः । तस्मिं सन्धये कुलपुत्रान्यः स तेन कालेन तेन समयेन महाकारुणिको नाम बभूव न चान्यो द्रष्टव्योऽहं स तेन कालेन तेन समयेन महाकारुणिको नाम बभूव रत्नगर्भस्य तथागतस्य पिता । अयं मे प्रथमचित्तोत्पादोऽभूत् । अनुत्तरायां सम्यक्सम्बोधौ प्रथमचित्तोत्पादेन च मे गणनातिक्रान्ताः सत्त्वाः समादापिता अनुत्तरायां सम्यक्सम्बोधौ.। अयं मे प्रथमः शूरभावः शूरकार्यञ्च योऽहं प्रणिधानवशेन ततश्चाविरत्वा-संकर्षणे बुद्धक्षेत्रे उपपन्नश्चण्डालकुले द्वितीयः शूरभावः शूरकार्यञ्च तदा मे चण्डालवंशे-स्थित्वा सत्त्वां कुशले नियोज्य स्वबलपराक्रमेण या बलचक्रवर्तित्वं प्राप्तं । सर्वजम्बूद्वीपे च कलिकलुषकलहाः प्रशमिता आयुश्च वर्द्धापिता अयं च मे प्रथम आत्मपरित्यागः यदा च मे नेत्राः परित्यक्ताः स्वचर्मपरित्यागश्च । साहं ततश्च्युतस्तस्मैव भद्रपर्ये क्षेत्रे द्वितीये द्वीपे प्रणिधानवशेन चण्डालकुले उपपन्नः पेयालं तत्र च सर्वेत्रवेण दृढवीर्यपराक्रमेण सत्त्वां नियोजयित्वा कुशलेषु कर्मसु याश्चण्डालचक्रवर्तित्वं मे प्राप्तं । तत्र च कलिकलुष-कलहवैरविग्रहाः प्रशमिता आयुश्च वर्द्धापितं । तत्र च स्वशरीरात् । जिह्वाकर्णौ च परि-त्यक्तौ यावत्प्रथमं तत्भद्रकल्पे महासाहस्रं बुद्धक्षेत्रं सर्वद्वीपेष्वेव एकवचा(रं)लं कृतं प्रणिधान दृढवीर्यपराक्रमेणानुमवज्येन प्रणिधानवशेन गङ्गा-नदी-वालिकासमेषु पञ्चकषायेषु बुद्धक्षेत्रेषु एवंरूपं महापुरुषकारं कृतं सत्त्वाश्च कुशलेषु नियोजिताः । त्रिषु च यानेषु समादापिताः । कलिकलुषकलहवैरविग्रहाः शमिताः । इत्ययं कुलपुत्रान्येषां बुद्धानां भगवतां बुद्धक्षेत्रं परिशुद्धं । यदा ते बुद्धा भगवन्तः पूर्वेऽनुत्तरां बोधिचर्यां चरमाणा न यत्रमापन्ना येव

यन्ति। न च परस्य भयं दर्शयन्ति। न श्रावकप्रत्येकबुद्धयाने सत्त्वान् समादापयन्ति। इत्यर्थं तेषां बुद्धानां भगवतां परिपूर्णाभिप्रायाणां परिशुद्धं बुद्धक्षेत्रं भवति। न च तत्र बुद्धक्षेत्रे आपत्तीनाम। न शिक्षाग्रहणस्य न च परुषवचनं श्रूयते न चाकुशले शब्दः। अन्यत्र धर्मशब्देन तद्बुद्धक्षेत्रमप्रगतामनापशब्देन स्फुटं भवति। यथा कामकरणीया च तत्र श्रावकप्रत्येकबुद्धयानस्य नाम प्रज्ञप्तिप्रादुर्भावोऽस्ति। यदा च मया गङ्गा-नदी-वालिकासमेषु महाकल्पेषु गङ्गा-नदी-वालिकासमेषु शून्येषु पञ्चकषायेषु बुद्धक्षेत्रेषु परुषवचनभयेन सत्त्वाः प्राणातिपातवैरमण्ये समादापिता न च त्रिषु यानेषु समादापिता निवेशिताः प्रतिष्ठापितास्ते न कस्मात्विशेषेण मे तद्विधं परिक्लिष्टं बुद्धक्षेत्रं अकुशलशब्देनापूरितं अकुशलमूलसमन्वागतैः सत्त्वैः परिपूर्णं स्थित्वा यानैर्धर्मं देशयामि। यथा च मे पूर्वप्रणिधानं कृतं तथारूपं बुद्धक्षेत्रं परिगृहीतं। यादृशाश्च मे सत्त्वा वैनेयाः परिगृहीतास्तादृशेनैव बलवीर्यार्थोद्योगेन बोधिचारिकाः चीर्णाः। यादृशं चैव बीजं प्रक्षिप्तं तादृशं बुद्धक्षेत्रं प्रतिलब्धं। यथारूपं मया प्रणिधानं कृतं सङ्क्षेपेण ते कुलपुत्र दानपारमितां कथयिष्यामि। यथा मया बोधिसत्त्वचारिकां चरमाणेन दानं परित्यक्तं। अन्यत्राष्टौ सत्पुरुषाः धरणिदत्तो नाम सत्पुरुषो बभूव दक्षिणायां दिशायां सर्वघोषायां लोकधातावनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः सङ्कुसमर्हच्चिर्नाम तथागतो वर्षशतायुष्कायां प्रजायां धर्मं देशयति। स समये शिवके परिनिर्वास्यति। एवं वीर्यसंचोदनो नाम बभूव बोधिसत्त्वः यः पुरिमायां दिशायामजयवत्यां लोकधातावनुत्तरां सम्यक्सम्बोधिमभिसम्बुद्धः। वर्षशतायुष्कायां प्रजायां बुद्धकार्यं कृतवान् गङ्गा-नदी-वालिकासमा कल्पातिक्रान्ताः।

यदा स तथागतोऽनुत्तरपरिनिर्वाणेन परिनिर्वृतः। अद्यापि तस्य महाकारुणिकस्य शरीराणि शून्येषु बुद्धक्षेत्रेषु पञ्चकषायेषु बुद्धकार्यं कुर्वन्ति। एवं च वदन्ति मारकुसुमितो बोधिसत्त्वो दृढवीर्यसमाधानो बलवेगपरित्यागेन बोधिसत्त्वचारिकां चरति दशगङ्गा-नदी-वालिकासमैर्महाकल्पैरतिक्रान्तैः पश्चात् स तथोत्तरायां दिशायां महेतुसङ्घर्षणो नाम भविष्यति पञ्चकषाये बुद्धक्षेत्रे तत्रासौ सत्पुरुषोऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यति महेतुकृत्यविध्वंसनराजो नाम भविष्यति। तथागतोऽर्हन् सम्यक्संबुद्धो यावद्बुद्धो भगवान्। प्रज्ञाधिसंक्षोभितदृष्टो नाम बोधिसत्त्वः सत्पुरुष सकष्ट महाकल्पव्यत्ययेन पश्चिमायान्दिशि भैरवतो नाम लोकधातुर्भविष्यति। पञ्चकषाये वर्षशतायुष्कायां प्रजायामनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते सूर्यगर्भो च विमलेन्द्रो नाम भविष्यति तथागतोऽर्हन् सम्यक्संबुद्धो भगवान्।

अथ पुनः संरोधनागमनातिक्रान्तैः कल्पैर्निर्दिष्टैरपरिमाणान्दिशि सारवर्चनिकुञ्जितायां लोकधातौ पञ्चकषाये तीव्रकलुषसङ्क्षोभवे कल्पेऽसौ संरोचनः पूर्वप्रणिधानेन पञ्चाशद्वर्षायुष्कायां तत्र सारवर्चनिकुञ्जितबुद्धक्षेत्रेऽनुत्तरां सम्यक्सम्बोधिमभिसम्भोत्स्यते। अधिमुक्तरोचनो नाम तथागतो भविष्यति यावद्बुद्धो भगवान् स पूर्वप्रणिधानेन दशवर्षाणि सकलबुद्धकार्यं कृत्वा परिनिर्वास्यति। तस्मैव दिवसे तस्य तथागतस्य सद्धर्मोऽन्तर्धास्यति दशवर्षाणि पुनस्तं बुद्धक्षेत्रं शून्यं भविष्यति। ततः पश्चादसौ महामतिराहु-

बोधिसत्त्वस्तत्र च सारवर्चनिकुञ्जिते बुद्धक्षेत्रेऽनुत्तरां
चनधर्मा नाम भविष्यति तथागतोऽर्हन् सम्यक्संबुद्धो भगवान् बोधि दशवर्षाणि
बुद्धकार्यं कृत्वानुपधिशेषे निर्वाणधातौ परिनिर्वास्यति। तस्य च परिनिर्वृतस्य
धानेन समवर्षाणि सद्धर्मः स्थास्यति। अथ द्वौ सत्पुरुषौ लब्धपूर्वव्याकरणौ
अनुत्तरायां सम्यक्सम्बोधौ भगवतः पुरतः पादौ शिरसा वन्दित्वा प्रीतिसौमनस्य-प्रामोद्येन
समतालमात्रप्रमाणमुपर्यन्तरीक्षेऽभ्युद्गम्य प्राञ्जलीभूतौ स्थित्वा भगवन्तमेकस्वरेण गाथा-
भिरध्यभाषतां।

विरोचसे बुद्ध यथैव सूर्यः
अभ्युद्गतो मेरुरिवत्रिलोके।
विशुद्धचक्षुर्विरजा विनायका
आलोकभूता सुगता नमोऽस्तु ते॥

बहुनिकल्पामतिवीर्यभाविता
पर्येषमाणो नतिं अग्रबोधिं।
बहुजिना पूजित पूर्वे ये त्वया
न चैव ते व्याकर्षीमतीतनायकाः॥

प्रहीणरागा परिमुक्तचित्ता
शान्त(न्ता)न्ति कार्यं इह सर्वलोके।
प्रनष्टमार्गा न देशेमि धर्मं
सत्त्वाश्च उत्तारयसे भवार्णवात्॥

यथापि प्रव्रज्य स्वयम्भूशासने
या प्रतिमोक्ष जिनशिष्यदेशिता।
यथापि शिक्षासमाहितेन्द्रिया
तथैव श्रामण सदा भवेमः॥

अनिश्रिता जीवितकायकामा
शास्तारसाशाय श्रुणिन्त धर्मं।
आसाद्य सम्यग्भिषेकभूमि
जिनोमि शाक्यो इदमेव चर्यं॥

अयं करो मैत्र सदेवलोके
भवेय मह्यं बहुमांसशोणितं ॥

शृण्वन्तु नागानरदेवयक्षा
ये देवताशैलगिरौ निवासिनः ।

कृपा ममोत्पन्न यसत्वहेतोः
तर्पयिष्ये त्वां स्वकमांसशोणितैः ॥

यदा च मया कृतं प्रणिधानं क्षुभितास्त्रयो लोकाः कम्पिता धरणी चलितो मेरुः सर्वश्च देवगणास्ततोऽहमात्मानन्दशपालात्पर्वतात्पातयामास ॥ प्रणिधानवशेन मम पर्वत-प्रमाण आत्मभावः संवृत्तः । योजनशतं विस्तारेण योजनमुच्चत्वेन ॥ यावन्मनुष्यनागपक्षिणः आरब्धा मांसरुधिरं भक्षयितुं । मम च कुलपुत्र सकायः सत्त्वैः परिभुज्यमानः प्रतिदिनं वर्द्धते योजनशतसहस्रं विस्तारेण संवृत्तः । योजनसहस्रमुच्चत्वेन सर्वत्र मानुषशिरा प्रादुर्भूता सकेशकर्णनयननासोष्ठदन्ताः सजिह्वा अनेकमुखशतसहस्राः प्रादुर्भूताः ते च मुखा मनुष्य-शब्देन घोषयन्ति । भोः सत्त्वा भो एह्यथ येनार्थमान् सम्परिभुञ्जथ । रुधिरं पिबथ नयना-न्गृह्णथ कर्णनासा केशोष्ठदन्तजिह्वा गृह्णथ । यस्यार्थे येनार्थे यावद्यूयं सर्पितशरीराः परिपूर्णा-भिप्राया अनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयथ । श्रावकयानेन वा प्रत्येकबुद्धयानेन वा । अयं युष्माकमुपभोगपरिभोगो न क्षीयते न च युष्माकं अद्धारेयं भविष्यति मायः । चित्तमेव क्षीयिसत्तदो भवतु । ये च तत्र विविधाः सत्त्वा ते केचिच्छ्रावकयाने चित्तमुत्पादयन्ति केचि-त्प्रत्येकबुद्धयाने केचिदनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयन्ति । केचित् पुनर्देवमनुष्यो-पपत्तौ चित्तान्युत्पादयन्ति । मांसमश्नयन्ति रुधिरं पिबन्ति । केचिन्नयनानि गृह्णन्ति केचि-त्कर्णौ केचिन्नासां केचिदोष्ठौ केचिद्दन्तान् गृह्णन्ति गृहीत्वा प्रक्रमन्ति प्रणिधानवशेन चान्यान्यं प्रादुर्भवति मांसं न क्षीणो भवति न परिक्षयं गच्छति । यावद्दशवर्षसहस्राणि सर्वे जम्बूद्वी-पकाः मनुष्या यक्षनागपक्षिणोऽपि स्वशरीरेण सन्तर्पयामास तेषु दशभिर्वर्षसहस्रैर्गङ्गा-नदी-वालिकासमानि मया नेत्राणि परित्यक्तानि । चतुःसमुद्रोदकप्रमाणं मया रुधिरं परित्यक्तं । सुमेरुसहस्रप्रमाणं मया मांसं परित्यक्तं । चक्रवाडपर्वतप्रमाणं मया जिह्वा परित्यक्ता पुनश्च-सुमेरुप्रमाणा मया कर्णाः परित्यक्ता विपुला सुमेरुप्रमाणा मया नासाः परित्यक्ता । दृढं गृध्रकूटपर्वतप्रमाणा मया दन्ताः परित्यक्ताः । कृत्स्नं सर्वं बुद्धक्षेत्रं प्रच्छादनप्रमाणं मे तत्र स्वचर्म परित्यक्तं यथ कुलपुत्र दशवर्षसहस्राणि एवमप्रमेया मह्यं परिमाणाः स्वशरीर-परित्यागाः परित्यक्ता एकजीवितेन एवमप्रमेया मह्यं परिमाणाः सन्तर्पिताः एकचित्तक्ष-णेऽपि मे विप्रतिसारो नोत्पन्नः एवं च तत्र प्रणिधानं कृतं । यथाहमनुत्तरां सम्यक्सम्बोधि-माशापरिपूर्य्यंतु यथा मयैकं द्वीपे स्वशरीरेण सर्वसत्त्वाः सन्तर्पिताः एवमेव गङ्गा-नदी-समभिसम्बुध्येय । अयं मे वालिकासमा वर्षसहस्रा आक्रान्तजन्मरजसुभिते बुद्धक्षेत्रे सर्व-द्वीपेष्वेवं रूपा समात्मभावः प्रादुरभवत् । यथैकद्वीपे दशवर्षसहस्राणि एवं सर्वद्वीपेषु सत्त्वा

स्वमांसरुधिरचर्म्मनयनकर्णनासौष्ठजिह्वाकोशैः सन्तर्पयित्वा त्रिषु यानेषु समादापयेयं मनुष्यां यत्तावत्सत्वां सर्व्वतिर्य्यग्योनिकाये केचिन्मांसरुधिरभोजनाहाराः पृथग्भूता यावद्दन्तशः । यामलौकिका तांश्चाहं सन्तर्पयेयं । यथाचाहमेकस्मिं बुद्धक्षेत्रे स्वशरीरेण सर्व्वसत्त्वां सन्तर्पयेयं । एवमेव समन्ताद्दशसु दिक्षु गङ्गा-नदी-वालिकासमेषु बुद्धक्षेत्रेषु स्वमांसरुधिरचर्म्मनयना यावज्जिह्वाभिरेवं रूपेणात्मभावेन गङ्गा-नदी-वालिकासमान्महाकल्पान्तेषु तेषु बुद्धक्षेत्रेषु स्वकायजीवितेन सत्त्वां सन्तर्पयेयं । एवंरूपमात्मभावं प्रतिलभ्य विसम्वादिता मे बुद्धा भगवन्तो भवेयु र्य दशसु दिक्ष्वन्येषु बुद्धक्षेत्रेषु प्रवर्त्तितधर्म्मचक्राः तिष्ठन्ति यापयन्ति धर्म्मं च देशयन्ति । माहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं मा चाहं संसारे संसरमाणो बुद्धशब्दं शृणुयां माच धर्म्मशब्दं मा सङ्घशब्दं मा पारमिताशब्दं मा मारबलपराजयशब्दं मा वैशारद्यशब्दं यावत्कुशलशब्दमपि संसारे मा शृणुयां नित्यश्चावीचौ नरके सम्भवेयं यदि मे एवं रूपा स्वशरीरपरित्यागाः सत्त्वसन्तर्पणार्थेन समृध्यन्ते नैवं रूपं च मे प्रणिधानं परिपूरि स्याद्यथा मे आशा चिन्तिता । येऽपि चैतस्मिन् बुद्धक्षेत्रे सर्व्वेषु द्वीपेष्वेकैकस्मिं द्वीपे एवं रूपा आत्मभावाः परित्यक्ताः सत्त्वाश्च मांसरुधिरेण सन्तर्पिता एवं दशसु दिक्षु गङ्गा-नदी-वालिकासमेष्वन्येषु बुद्धक्षेत्रेषु सत्त्वा एवंरूपेणात्मभावेन स्वमांसरुधिरेण सन्तर्पिताः । यस्य कुलपुत्रस्य तथागतस्य दानपारमिता आत्मभावपरित्यागं ये यथानुप्रबन्धेन तत्कालं नेत्राः परित्यक्ताः तेषां पुनरयं जम्बूद्वीपे यावत्सर्षपस्त्रिंशद्वेत्रपर्य्यन्तप्रमाणो राशिर्भवेत् ।

अयं कुलपुत्र तथागतस्य संक्षिप्तेन आत्मपरित्यागदानपारमिता । पुनरपरं कुलपुत्र ततः पश्चादप्रमेयानां कल्पानामत्ययेन अयं बुद्धक्षेत्रमवविद्युतं नाम बभूव । अहं चास्मिं जम्बूद्वीपे राजा बभूव । प्रदीपप्रद्योतो नाम बलवांश्चक्रवर्त्ती एवं च मया सर्व्वजम्बूद्वीपकाः सत्त्वाः कुशलेषु नियोजिता यथापूर्व्वोक्तं । पश्चाद्दहमुद्यानभूमिं निर्यातः स्वभूमिदर्शनाय तत्र चाहं पुरुषमद्राक्षं । पश्चाद्बाहुबन्धनं बध्यमानं दृष्ट्वा मयामात्याः पृष्टाः किमेनेन पुरुषेण कृतं अमात्या मां प्रत्युचुरयं पुरुषो देवस्य सापराधिकाय देवस्य पुरुषस्य सम्वत्सरे अर्घं धान्य चोत्पद्यते । ततो देवस्य षट्कांशो देयः । यथान्ये कुटुम्बिनो ददन्त्यायद्वारं । ये देवस्य नगरग्रामे जनपदकर्वटेषु प्रतिवसन्ति कर्म्मान्तेन जीविकां कल्पयन्ति । सं चैष पुरुषो न ददाति । तानस्मैतद्वोचं । ततजत एवं पुरुषं मा कस्यचिद्गृहाद्धनधान्यं गृहीत ते कथयन्ति देव न कश्चित्सुप्रसन्नचित्तो ददाति यद्देवस्य दिवसदिवसेऽन्न पानभोजनपरिभोगो देवीनां देवस्य योऽन्तःपुरदेवस्य पुत्राणां दुहितॄणामुपभोगपरिभोगः सर्व्वं तत्परः सकाशादुद्ध्रियते । न च कश्चित्प्रसन्नः प्रयच्छति । तत्राहं परमदुर्मना चिन्तयामि कस्यादमिमं सर्व्वं जम्बूद्वीपं राज्यैश्वर्य्यं दद्यां । मम पञ्चपुत्रशतानि बभूवुस्तांश्च बोधौ समादापयित्वा इमं जम्बूद्वीपं पञ्चभागशतानि कृत्वा पुत्राणां प्रदत्तं । अहं च तपोवनं गत्वा ऋषिप्रव्रज्येन ब्रह्मचर्य्यं चचार । वनषण्डे उदुम्बरमूले दक्षिणस्य महासमुद्रस्य नातिदूरेण च मूलफलाहारो विहरामि ध्यायी अनुपूर्व्वेण पञ्चाभिज्ञः संवृत्तः । तेन खलु पुनः समयेन पञ्चशतानि जंबूद्वीपकानां वाणिजानां महासमुद्रमवतीर्णोऽभिरुतः प्रभूतो रत्नस्कन्ध आसादितः तत्र च चन्द्रोनाम सार्थवाह स्तेन भाग्यवता विद्युद्भयेश चिन्तामणिः समासादित. स तस्मा रत्नद्वीपाद्विपुलं रत्नधनस्कन्धं

तञ्च चिन्तामणिं गृहीत्वा समभ्युत्थितः ततः क्षुभितः समुद्रनागा आकुला निर्वेगिन्यासन् चायस्तोनाम ऋषिर्बोधिसत्त्वः पूर्वप्रणिधानेन तत्रोपपन्नः तेन संसार्य: स्वस्तिना क्षेमेण च महासमुद्रादुत्तारितस्तस्य च सार्थवाहस्यानन्तरो दुष्टो नागकः प्रत्यर्थिकोऽवतारप्रेक्षी विवरगवेषी पृष्ठतः पृष्ठतः समनुबद्धः तेन सप्तदिवसानि परमकलुषा वातवृष्टिरवसृता यतस्ते वणिजः प्रनष्टमार्गा परमभीता उच्चस्वरेण रुदन्ति हरन्ति परिदेवन्ति वा याचन्ति । शिवब्रह्मणां यावन्मातापितरमाक्रन्दति प्रियपुत्रां यावदश्रौषीच्छन्दिकेन श्रोत्रेण यावत्समाश्वासा वणिजः समाश्वासिः समागतोऽहमाभायः अहं युष्माकं मार्गमुपदर्शयिष्यामि यावज्जम्बूद्वीपं स्वस्तिना क्षेमेण च प्राप्स्यथ तदाहमष्टतैलेन वर्तायित्वा स्वहस्तं वेष्ट्य अग्निना प्रज्वाल्य सत्यवचनमकरोत् । यदि मया षट्त्रिंशद्वर्षाणि चतुर्भिर्ब्राह्मैर्विहारैर्वनषण्डनिवासिनां सत्त्वानामर्थाय हिताय नवमूलफलाहारेण चतुरशीतीनां नागसहस्राणां चित्तसन्ततिः परिपाचिता अवैवर्तिकाश्च स्थापिता अनुत्तरायां सम्यक्सम्बोधौ तेन सत्येन सत्यवचनेन कुशलमूलपरिपाकेन ज्वलतु मे हस्तं लभन्तु मार्गं वणिजः स्वस्तिना क्षेमेण जम्बूद्वीपं प्राप्नुवन्तु । यावत्सप्तरात्रिंदिवसाः स्वहस्तं ज्वालितवान् । ते वणिजो जम्बूद्वीपे स्थापितास्तत्र मया प्रणिधानं कृतं यदा जम्बूद्वीप रत्नपरिक्षीणं भवेत् । तदाहमनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । तदा वयं मे आशा परिपूर्यंतु । सार्थवाहो भवेयं जम्बूद्वीपे सप्तवारं चिन्तामणिमानयित्वा विविधं रत्नवर्षमभिप्रवर्षेयं । यावत्सर्वद्वीपेष्वसिं बुद्धक्षेत्रे एवमेव दशसु दिक्षु गङ्गा-नदी-वालिकासमेषु शून्येषु बुद्धक्षेत्रेषु पञ्चकषायेषु रत्नं प्रवर्षयेयं यावत्पूर्वोक्तमेवं च मे आशापरिपूर्णानां गङ्गा-नदीवालिकासमानां महाकल्पानामन्तरेण सार्थवाहोऽभूवम् गङ्गा नदी वालिकासमेषु शून्येषु पञ्चकषायेषु बुद्धक्षेत्रेषु रत्नानि प्रवर्षितानि । एकैकद्वीपे सप्तवारं विविधं रत्नवर्षं प्रवर्षितं एवमप्रमेया सङ्ख्याः सत्त्वा रत्नैः परितृप्ताभिप्रायाः कृतास्त्रिषु च यानेषु नियोजिताः पश्य कुलपुत्र तथागतस्य रत्नपरित्यागस्य विपाककुशलमूलं । पुनरपरं कुलपुत्राप्रमेयासङ्ख्येयाः कल्पानामत्ययेनान्तरेणायं बुद्धक्षेत्रं किमिननामाभूत् तत्रास्मिं कल्पे वर्तमाने पञ्चकषाये पञ्चवर्षसाहस्रिकायां प्रजायां प्रणिधानेनाहमस्मिं जम्बूद्वीपे सूर्यमालान्यो नाम ब्राह्मणोऽभूवम् वेदपाठकः तत्काले च सत्त्वा भूयसा प्राणातिपातिनोऽभूवन् घोरपराक्रमाः सकलहाधिपुत्राः तेषां चाहं महाबलवेगपराक्रमेण सत्त्वानां प्रत्युत्थितं क्षान्तिप्रयोगेन धर्मं देशयामि शून्यग्रामायतनप्रत्यवेक्षणाप्रत्ययसमनुबद्धं मोक्षाद्भयं आगारसमस्तमलङ्कारं दर्शयामि । तेऽनुत्तरायां सम्यक्सम्बोधौ चित्तोत्पादे न कुशलमूले परिणामनाभियोजिताः स्वयमेव चाहं पञ्चाभिज्ञः संवृत्तः तेन च समयेनाप्रमेया सङ्ख्याः सत्त्वा ममानुशासनेन पञ्चाभिज्ञाः संवृत्ता एवमप्रमेया सङ्ख्याः कलहविग्रहवैरोचनवधबन्धनपरित्यज्य वनषण्डमाश्रित्य वनषण्डे मूलफलाहारा ध्यायन्तश्चतुर्भिर्ब्राह्मैर्विहारै रात्रिंदिवमतिनामितवन्तः । ततः षष्टितमे कल्पे यदा तैर्महर्षिभिः कृत्स्नं जम्बूद्वीपं स्फुटमभूत्तं च कलिकलहवैरविग्रहविवादाः प्रशान्ताः । अकालवातवर्षाः प्रशमिताः प्रणीतामहाजवती पृथिवी सद्विग्रहशस्या बभूव । केवलं विविधरोगोपहता बभूवुः कल्पदोषेण । तदाहमेवं चिन्तयामि यदहं सत्त्वानां व्याधिं न शक्तः शमयितुं । तच्च ममैतदभवत् यन्नूनमहं शक्रं महाब्रह्माणं

लोकपालां श्चन्ये च देवा ऋषयो वा मनुष्यर्षयश्च सन्निपातयेयं भैषज्योपकरणशास्त्रं सत्त्वानां हितार्थमुपदर्शयेयं तदहमृद्ध्या गत्वा शक्रब्रह्मलोकपाल देवर्षीणां नागर्षीणां मनुष्यर्षीणां मारो यक्ष विदुपतिर्नाम पर्व्वतः तत्र सन्निपातयित्वा विदुत्तरकमूर्धनि नामध्यानं भूतसन्निवारणप्रतिशरणं रक्तवातपित्तश्लेष्मसमप्रसादनशास्त्रं निर्देशयेयं । पेयालं । अप्रमेयासंख्येयानां सत्त्वानां व्याधिप्रशमनं कृतं तत्र महाप्रणिधानं कृतं यथा मयैकदिवसेऽप्रमेयासंख्येयानां सत्त्वानां प्रज्ञावभासः कृतः त्रिषु च यानेषु नियोजिता अपायपथाः पिधिताः स्वर्गपथप्रतिष्ठापिता विविधाश्च व्याधयः प्रशमिताः परिमोचिताश्च । एवमप्रमेयाणामसंख्येयानां सत्त्वानां प्रज्ञालोको दत्तः सौख्ये च स्थापिताः । तदनेन कुलपुत्र कुशलमूलविपाकेन इयं मे प्रणिधानाशाःपरिपूर्णाः यदा च मयैकदिवसेऽप्रमेयाणामसंख्येयानां सत्त्वानामपायपथा निरोधिताः स्वर्गपथे च प्रतिष्ठापिता ग्लानप्रत्ययापकरणार्थं देवर्षियक्षबहवः सन्निपातिताः सत्त्वानामर्थाय विदुत्तरकमूर्धनि पैवलोके प्रकाशिते सत्त्वानामारोग्यसौख्यमेवमेव तिमिरे बुद्धक्षेत्रे सर्व्वद्वीपेषु यैवं रूपः पुरुषकारः कृतः सत्त्वाश्च स्वर्गपथे प्रतिष्ठापिता देवनागयक्षमनुष्या ऋषयः सन्निपातिताः येषां सत्त्वानामर्थाय विविधा विद्यास्थानाः प्रकाशिताः यथेह तिमिरे बुद्धक्षेत्रे एवमेव दशसु दिक्षु गङ्गानदीवालिकासमेषु पञ्चकषायेषु बुद्धक्षेत्रेष्वेवंरूपः पुरुषकारः कृतः सत्त्वाश्च त्रिषु यानेषु नियोजिताः स्वर्गपथे च प्रतिष्ठापिता विविधाश्च विद्यास्थानालोको प्रकाशिताः सत्त्वा व्याधितः परिमोचिता अनुत्तरा च मे कुलपुत्रैवं रूपा आशा परिपूर्णा । अपि तत्र तिमिरे बुद्धक्षेत्रे सर्व्वद्वीपेष्वेवं रूपः पुरुषकारः कृतो यथा प्रणिधानं कृतं । अप्यनुत्तरेण ज्ञानेन दशसु दिक्षु गङ्गानदीवालिकासमेषु शून्येषु पञ्चकषायेषु बुद्धक्षेत्रेष्वेकैकस्मिन् बुद्धक्षेत्रे सर्व्वद्वीपेष्वेवंरूपः पुरुषकारः कृतो यथा मे पूर्व्वप्रणिधानं कृतं । एतत् कुलपुत्र प्रज्ञाविशेषं बोधिचर्यायां अयं च तथागतस्य कायो सुचरितानां कुशलमूलबीजं । तथा भत्ययरकालघकल्पेऽसंख्येयैः कल्पैरधिकतरैरन्तरेणेदं बुद्धक्षेत्रं विचितदोषं नामाऽभूत् । संघयते महाकल्पे वर्त्तमाने तदपि पञ्चकषायं पुरिमायान्दिशमुपस्थायां चातुर्द्वीपिकायां वर्त्तमानं जम्बूद्वीपमभूत् तत्राप्यहं सत्त्वपरिपाचनार्थमुपपन्नः चतुर्द्वीपेश्वरः चक्रवर्ती राजा अम्बरो नाम बभूव । तत्र च मया सत्त्वा दशसु कुशलेषु कर्म्मपथेषु समादापिता निवेशिताः प्रतिष्ठापिता स्त्रिषु यानेषु समादापिता निवेशिताः प्रतिष्ठापिताः सर्व्वश्च बभूव सर्व्वप्रदायी तत्र च मे याचनका आगत्वा विविधानि रत्नानि याचन्ति । तद्यथा हिरण्यसुवर्णं यावच्चेन्द्रनीलमहानीलज्योतीरसोदकप्रसादकाभियाचनकानान्तावत्प्रभूतानि रत्नानि लभ्यन्ते । तदाहमाध्या पृष्टवान् कुत एषां रत्नानां प्रादुर्भावः त आहुः । नागराजानो निधीन्निर्दर्शयन्ति निधीनां लोके प्रादुर्भावो रत्नाना प्रादुर्भावो भवति । न केवलन्तात्तका निर्देशयन्ति यात्तका देवप्रयाचनकाः तदाहं प्रणिधानमकरोत् । यदाहं पञ्चकषाये लोके वर्त्तमाने तीव्रक्लेशारण्ये कलियुगे वर्त्तमाने वर्षशतायुष्कायां प्रजायामनुत्तरां सम्यक्सम्बोधिमभिसम्बुध्येयं । तदियं मे आशापरिपूर्य्यतु यदस्मिन्नस्मिन् बुद्धक्षेत्रे निधिदर्शको नाम नागराजा भवेयं । सर्व्वत्र चास्मिं विजितघोषे बुद्धक्षेत्रे सर्व्वद्वीपेषु च एकैकस्मिन् द्वीपे समजन्मानि परिगृह्णीयां । एकैकस्मिंश्च जन्मनि निधिकोटीनयुतशतसहस्राणि दर्शयेयं । प्रत्येकं च नानारत्नपरिपूर्णानि । तद्यथा

सर्व्वशरीरस्यैवाङ्गप्रत्यङ्गानि परित्यजता एकक्षणमपि न विप्रतिसारिकृतं चित्तं न च मे रोष उत्पादितस्तेन मे आशा परिपूर्ण्यतु अयं मे कायो मांसपर्व्वतः सन्निपततां । ये केचित्सत्त्वा मांसाहारा रुधिरपातारस्ते मांसम्भक्षयन्तु यावच्च मे सत्त्वा मांसम्भक्षयेयुः रुधिरं च पिबेयुस्तावन्मे प्रणिधानवशेन शरीरं वर्धतु । अनुपूर्व्वेण यावद्योजनशतसहस्रमुच्चत्वेन कायः सम्भवतु । पञ्चयोजनसहस्रं विस्तारेण । तत्र मया वर्षसहस्रं स्वमांसरुधिरेण सत्त्वाः सन्तर्पिता यावच्चास्य मया जिह्वाः परित्यक्ता या मृगपक्षिभिः परिभुक्ताः प्रणिधानवशेनचान्यान्याः प्रादुर्भूताः सेयामयं वृध्रकूटपर्व्वतप्रमाणो राशिः व्यवस्थितः चानुत्तरा प्रभूतजिह्वता लक्षणप्रतिलाभाय मे प्रणिधानं कृतं । तथाहं च्युत्वा रत्नखण्डे जम्बूद्वीपे पूर्व्वप्रणिधानेन नागेषूपपन्नो निधिसन्दर्शनो नाम नागराजा बभूव । यामेव रात्रिं नागेषूपपन्नस्तामेव रात्रिं निधिकोटीनयुतशतसहस्राणि निधानानां सन्दर्शितानि स्वयमेव घोषं चारयामि । भोः सत्त्वा अस्मिन्प्रदेशे निधिः प्रादुर्भूतः नानारत्नपरिपूर्णस्तद्यथा हिरण्यसुवर्णः यावत्सुरकप्रवालकं पूयं गृह्णध्वं गृहीत्वा भोः सत्त्वा दशकुशलान् कर्मपथान् समादाय वर्त्तध्वं । अनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयत । श्रावकयानेन वा बुद्धयानेन वा चित्तमुत्पादयथ गृह्णथ रत्नानि यावदर्थं । तत्र च रत्नखण्डे जम्बूद्वीपे सप्तनागजन्मपरिवर्त्तनसप्तसप्तवर्षकोटीनयुतशतसहस्रेष्वप्रमेया सङ्ख्येया निधयो निदर्शितास्य एवं तत्राप्रमेया सङ्ख्येयाः सत्त्वास्त्रिभिर्यानैर्निवेशिता दशसु कुशलेषु कर्मपथेषु निवेशिता नानाविधैश्च रत्नैः सन्तर्पिता अनुत्तराद्वात्रिंशल्लक्षणप्रतिलाभाय प्रणिधानं कृतं । एवं द्वितीये द्वीपे सप्तभिर्नागजन्मपरिवर्त्तैरेवंरूपं पुरुषकारं कृतवान् । एवं तृतीये यावत्सर्व्वस्य विजितदोषायां लोकधातौ सर्व्वेषु द्वीपेषु एवंरूपः पुरुषकारः कृतः । एवमेव दशसु दिक्षु गङ्गा-नदी-बालिकासमेषु शून्येषु पञ्चकषायेषु बुद्धक्षेत्रेषु । एकैकस्मिं द्वीपे एवं सप्तः सप्तनागजन्मपरिवर्त्तेषु मया यावत्सप्तवर्षकोटीनयुतशतसहस्रैरेवमप्रमेया संख्येया निधयः सत्त्वानां प्रदत्ता यावद्यथापूर्वोक्तं पश्य कुलपुत्र तथागतस्य बोधिचारिकां यथा तथागतस्तीव्रतीव्रेण बलवीर्य्येण द्वात्रिंशल्लक्षणपर्य्येषणबोधिचर्य्यां चीर्णवान् यथात्र पूर्वं ये बोधिसत्त्वा एवंरूपा तीव्रबलवीर्येण बोधिचारिकां चीर्णवन्तः नैतत्कश्चिदेतर्हि नरः पुनः कश्चित्सम्भविष्यति । बोधिसत्त्वाय एवं तीव्रेणोद्योगबलवेगेनानुत्तरायां सम्यक्सम्बोधौ चारिकां चरेत् स्थापयित्वा तानष्टौ यथापूर्वोक्तं । तदा चासंख्येयानां कल्पानामत्ययेन प्रत्यवरकालसमयेनेदं बुद्धक्षेत्रं प्रभाडोङ्गयानिनोम बभूव । शून्ये पञ्चकषाये वर्त्तते वर्त्तमानेऽस्यां चातुर्द्वीपिकायामहं यक्षोऽभूवम् स विरोचनोनाम । अपायमहमस्मिं जम्बूद्वीपे सत्त्वानामकुशलपर्य्येष्टिचर्यं दृष्ट्वा चाहं परमभीषणकं यक्षरूपमात्मानमभिनिर्म्मायास्मिं जम्बूद्वीपेऽवतीर्य्य मनुष्याणां पुरतः प्रत्यस्थां* तेच मां दृष्ट्वा भीता मां पृच्छन्ति केन ते प्रयोजनं वयन्ते तद्दास्यामः मयोक्तं आहारेण मे प्रयोजनन्त आहुः कीदृशस्त आहारः मयोक्तं मनुष्यान्मारयित्वा भक्षयामि तांश्चाहं न खादयामि ये मनुष्या यावज्जीवं प्राणातिपाताद्विरता यावन्मिथ्यादृष्ट्याः प्रतिविरता अनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादयन्ति

---

* प्रत्युपस्थास्यामि इति पाठः साधुः ।

प्रत्येकबुद्धयानेन वा श्रावकयानेन वा चित्तमुत्पादयन्ति तानप्यहं न सत्त्वा निर्म्मितकाः परिमुक्तायां दृष्ट्वा ते सत्त्वा भयेन यावज्जीवं अदत्तादानाद्यावन्मिथ्यादृष्टेः प्रतिविरताः केचिदनुत्तरायां सम्यक्सम्बोधौ केचित्प्रत्येकबुद्धयाने केचिच्छ्रावकयाने चित्तमुत्पादितं सर्व्वे चातुर्द्वीपिकाः सत्त्वा कर्म्मपथेषु त्रिषु च यानेषु प्रतिष्ठापिता अत्र मया प्रणिधानं कृतं । यदि मेऽनुत्तरायां सम्बोधौ आशा परिपूर्य्यते तदिदं मे प्रणिधानपरिपूर्य्यं भवेत् । यथा च मे चातुर्द्वीपिकाः सत्त्वाः कुशले मार्गे नियोजिता एवमेव सर्व्वत्रास्मिं बुद्धक्षेत्रे सर्व्वचातुर्द्वीपिकेषु सत्त्वाः एतद्रूपेण भयेन मां पश्येयुः । दशसु चैव कुशलेषु कर्म्मपथेषु प्रतिष्ठापयेयं त्रिषु च यानेषु नियोजयेयं । एवमेव समन्ताद्दशसु दिक्षु शून्येषु पञ्चकषायेषु बुद्धक्षेत्रेषु सत्त्वां दशसु कुशलेषु कर्म्मपथेषु प्रतिष्ठापयेयं त्रिषु च यानेषु नियोजयेयं । एवमेव मे कुलपुत्र आशाप्रणिधिश्च परिपूर्णः सर्व्वत्र प्रवाडोडुयानायां लोकधातौ मनुष्या एतद्रूपेण विनीताः कुशलेषु धर्म्मेषु । एवमेव दशसु दिक्षु गङ्गानदीवालिकासमेषु पञ्चकषायेषु बुद्धक्षेत्रेषु एतद्रूपेण मया मनुष्याः कुशलमार्गचर्य्यायां प्रतिष्ठापिताः । यथा च मया बहवः सत्त्वा भयात् कुशलचर्य्यायां प्रतिष्ठापिताः तेन कर्म्मावशेषेण ममैतर्हि बोधिवृक्षे वज्रासने निषण्णस्य बोधिमभिसम्बोद्धुकामस्य मारः पापीयान् महासैन्येनोपसंक्रान्तो बोधौ व्याक्षेपकरणार्थं ।

अयं मे कुलपुत्र षड्भिरिव दानपारमिता बोधिचर्य्याञ्चरमाणस्य लब्धा याहं गम्भीरां क्षान्तिं गम्भीरां धारणीं । गम्भीरं समाधिं । पञ्च लौकिकाभिज्ञाः प्रतिलब्धाः एवंरूपं महापुरुषकारं कृतवान् एवमप्रमेयासंख्येयाः सत्त्वा अनुत्तरायां सम्यक्सम्बोधौ समादापिता निवेशिताः प्रतिष्ठापिता. एवमप्रमेयासंख्येयाः सत्त्वाः प्रत्येकबुद्धयाने एवमप्रमेयासंख्येयाः सत्त्वाः श्रावकयाने समादापिता निवेशिताः प्रतिष्ठापिताः । स्थापयित्वा यावन्तो मया बोधिसत्त्वचर्य्यायाञ्चरमाणेन बुद्धक्षेत्रपरमाणुरजःसमा मे बुद्धा भगवन्तः पर्य्युपासिताः । एकैकस्य बुद्धस्यान्तिके सागरोदकबिन्दुप्रमाणा मया गुणाः परिगृहीताः यथातिक्रान्तानां प्रत्येकबुद्धानां मया पूजा कृता गणनातिक्रान्तानां तथागतश्रावकाणां पूजा कृता । एवं मातापितॄणां पञ्चाभिज्ञानामृषीणां पूजा कृता । मया च कृपया पूर्व्वं बोधिसत्त्वचर्य्यां चरमाणेन समांसरुधिरेण सत्त्वाः सन्तर्पिता इदानीमपि धर्म्मेण सन्तर्पिताः ॥

इति श्रीकरुणापुण्डरीके महायानसूत्रे दानपरिवर्त्तो नाम पञ्चमः ॥

---

यथाहं कुलपुत्र बुद्धचक्षुषा पश्यामि दशसु दिक्षु बुद्धक्षेत्रपरमाणुरजःसमान् बुद्धान् भगवतः परिनिर्वृतान् ये मया प्रथममनुत्तरायां सम्यक्सम्बोधौ समादापिता निवेशिताः प्रतिष्ठापिताः ये मया दानपारमितायां प्रथमं समादापिता यावत् प्रज्ञापारमितायां समादापिता निवेशिताः प्रतिष्ठापिताः । एवमेवैतर्हि पूर्व्वस्यान्दिशि अप्रमेया असंख्येयास्ते बुद्धा भगवन्तः प्रवर्त्तितधार्म्मिकधर्म्मचक्राः तिष्ठन्तो यापयन्तो धर्म्मं देशयन्तोऽद्राक्षं । ये मया प्रथममनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादिता निवेशिताः प्रतिष्ठापिताः एवं यावत् षट्सु पारमितासु

वक्तव्य एवं दक्षिणे पश्चिमोत्तरे ईशानोपरिषु दिक्षु वक्तव्यं। पश्याम्यहं कुलपुत्र पूर्वस्मिं दिग्भागे इतो बुद्धक्षेत्रादेकनवतिबुद्धक्षेत्रशतसहस्राण्यतिक्रम्य संपुष्पिते लोकधातौ विमलतेजःगुणराजो नाम तथागतस्तिष्ठति. ध्रियति यापयति धर्मञ्च देशयति मया च भगवान् पूर्वं प्रथममनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादितः समादापितो निवेशितः प्रतिष्ठापितः। मया दानपारमितायां यावत्प्रज्ञापारमितायां प्रथमं समादापितः पेयालं पूर्वस्यान्दिशि अभिरत्यं बुद्धक्षेत्रे अक्षोभ्यो नाम तथागतो जंबूनदे बुद्धक्षेत्रे सूर्य्यगर्भो नाम तथागतः रत्नेश्वरे बुद्धक्षेत्रे रत्नेश्वरघोषज्योतिर्नाम तथागतः सूर्य्यप्रतिष्ठिते बुद्धक्षेत्रे ज्ञानभास्करो नाम तथागतः जयवैश्वये बुद्धक्षेत्रे नागाभिनर्दितो नाम तथागतः सञ्जीवने बुद्धक्षेत्रे वज्रकीर्त्तिर्नाम तथागतः स्वरक्षे बुद्धक्षेत्रे व्याघ्ररश्मिर्नाम तथागतः भरतीये बुद्धक्षेत्रे सूर्य्यगर्भो नाम तथागतः। वैरप्रभे बुद्धक्षेत्रे कीर्त्तीश्वरराजो नाम तथागतः मेरुप्रभे बुद्धक्षेत्रे अचिन्त्यराजो नाम तथागतः सम्बरे बुद्धक्षेत्रे ज्योतिषीर्नाम तथागतः कुसुमप्रभे बुद्धक्षेत्रे प्रभाकेतुर्नाम तथागतः। सीमोत्तरे बुद्धक्षेत्रे मेरुस्वरसन्दर्शनमेरुर्नाम तथागतः धरणाश्रयां बुद्धक्षेत्रे ध्यानबिम्बो नाम तथागतः॥ कुसुमविचित्रे बुद्धक्षेत्रे विमलनेत्रो नाम तथागतः। एतां पूर्व्वङ्गमां कृत्वा कुलपुत्र पूर्वस्यां दिश्यप्रमेयासंख्येयान् बुद्धान् भगवतः तिष्ठतो यापयतो धर्म्मं देशयतो बुद्धचक्षुषा पश्यामि। येनाहमुत्पादितबोधिचित्ताः पूर्व्वमनुत्तरायां सम्यक्सम्बोधौ समादापिता मया च प्रथमं दानपारमितायां यावत्प्रज्ञापारमितायां समादापिताः प्रतिष्ठापिता मया च प्रथमं तिष्ठतां यापयतां बुद्धानां भगवतां सकाशमुपनीताय तत्र सर्व्वप्रथमं व्याकरणं प्रतिलब्धं अनुत्तरायां सम्यक्सम्बोधौ।

अथ तस्यां वेलायां संपुष्पितायां लोकधातौ तस्य विमलगुणतेजराजस्य तथागतस्यासनं प्रकम्पितं। ये तत्र बोधिसत्त्वास्ते तस्य विमलगुणतेजराजस्य तथागतस्यासनं प्रकम्पितं दृष्ट्वा तमेव तथागतं पृष्टवन्तः को भदन्त भगवन्हेतुः कः प्रत्ययो यदिदं मे दृष्टपूर्व्वं भगवत आसनं प्रकम्पितमिति। स तथागतस्तानवोचत् अस्ति कुलपुत्राः पश्चिमे दिग्भागे इतो बुद्धक्षेत्रादेकोननवतिबुद्धक्षेत्रानतिक्रम्य तत्र सहानामलोकधातुस्तत्र शाक्यमुनिर्नाम तथागतस्तिष्ठति ध्रियते यापयति। स एतर्हि चतसृणां पर्षदां पूर्व्वयोगमारभ्य धर्म्मं देशयति। तेन तथागतेन पूर्व्वं बोधिसत्त्वभूतेनानुत्तरायां सम्यक्सम्बोधौ समादापित येन मे प्रथममनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पन्नं तेन तथागतेनाहं प्रथमं दानपारमितायां समादापितो निवेशितो प्रतिष्ठापितो यावत्प्रज्ञापारमितायां तेन तथागतेन पूर्वबोधिसत्त्वचर्य्यां चरताहं प्रथमं तिष्ठतां यापयतां बुद्धानां भगवतां सकाशमुपनीतो यत्र मे प्रथमं व्याकरणं प्रतिलब्धमनुत्तरायां सम्यक्सम्बोधौ। स च मे शाक्यमुनिस्तथागतः कल्याणमित्रः सहे लोकधातौ तिष्ठति यापयति स एवं चतसृणां पर्षदामिमं पूर्व्वयोगमारभ्य धर्म्मं देशयति तेन तथागताधिष्ठानेन ममासनं कम्पते। को युष्माकं कुलपुत्रोत्सहते मद्वचनात्सहं बुद्धक्षेत्रं गन्तु शाक्यमुनेस्तथागतस्यारोग्यकौशल्यं परिपृच्छनाय। ततस्ते बोधिसत्त्वा विमलतेजराजानं तथागतमाहूय इह भदन्त भगवन् संपुष्पिते बुद्धक्षेत्रे ऋद्धिमन्तः सर्व्वबोधिसत्त्वगुणपारमितामासास्तेऽद्य पूर्व्वाङ्गसमये महान्तमवभासं दृष्ट्वाऽस्माद् बुद्धक्षेत्राद्दिक्कुर्य्यामभ्यागता-

स्तेनायं मुहूर्त्तं पृथिवीचालः पुष्पवृष्टिश्च । ते च बोधिसत्त्वा आहुः वयमपि भदन्त गच्छामस्तं सहं बुद्धक्षेत्रं तं शाक्यमुनिं वन्दनाय पर्युपासनाय तं च सर्व्वसत्त्वाकारकायी-सुखप्रवेशं धर्म्मपर्य्यायं श्रवणाय । ते बहुबोधिसत्त्वशतसहस्राः स्तेनर्द्ध्यनुभावेन ततो बुद्ध-क्षेत्रात्तस्मिन्स्थिताः तेनात्रागच्छन्ति क्व गन्तव्यं । तेऽप्याहुः तामपि वयं भदन्त भगवन्दिशं न जानीमो यत्र सहालोकधातुः शाक्यमुनेस्तथागतस्य बुद्धक्षेत्रं । ततः स विमलतेजोराजस्तथा-गतो बाहुं प्रसार्य्य पञ्चभ्योऽङ्गुलिभ्यो विविधान्यर्च्चींषि प्रमुमोच । ततस्तार्च्चींषि एकोनवन-तिबुद्धक्षेत्रसहस्राण्यवभासितवान् । यावच्चेमं सहं बुद्धक्षेत्रमवभासितवान् । यतस्ते बोधि-सत्त्वाः पश्यन्ति सर्व्वावदिमं सहं बुद्धक्षेत्रं स्फुटं बोधिसत्त्वैर्गगनतले च देव-नाग-यक्षासुरैः स्फुटं । दृष्ट्वा च पुनस्ते बोधिसत्त्वास्तं विमलगुणतेजोराजानं तथागतमेवमाहुः । पश्यामो वयं भदन्त भगवन् सहं बुद्धक्षेत्रं । सर्व्वावन्तं स्फुटं नास्ति तत्रावकाशोऽन्तशो दण्डनिक्षेपणमात्र-मपि । यत्र स्फुटो बोधिसत्त्वैः पश्यामः शाक्यमुनिस्तथागतोऽस्माभिरीक्षते धर्म्मं च देश-यति । स च विमलगुणतेजराजस्तथागतस्तेषां बोधिसत्त्वानामेवमाह । समन्तचक्षुः कुलपुत्राः शाक्यमुनिस्तथो ये केचित् कुलपुत्रा सहे लोकधातौ सत्त्वा भूमिस्थिता वा अन्तरीक्षस्थिता वा । ततश्चैकैकः सत्त्व एवं संजानाति मां शाक्यमुनिस्तथागतः सर्व्वचेतसा निरीक्षते ममैक-मारभ्य धर्म्मं देशयति । यथं यथैव च कुलपुत्र शाक्यमुनिस्तथागतो धर्म्मं देशयति । एकवर्ण-स्थानं ये च तत्र कुलपुत्र सत्त्वा ब्राह्मभक्तास्ते शाक्यमुनिं तथागतं ब्रह्माणं समनुपश्यन्ति महाब्रह्मपरिविहारेण धर्म्मं शृण्वन्ति । यावद् ये मारभक्तिका ये सूर्य्यभक्तिका ये चन्द्रभक्तिका ये वैश्रवणभक्तिका ये विरूढकभक्तिका ये धृतराष्ट्रभक्तिका ये महेश्वरभक्तिकास्ते सत्त्वा महे-श्वरस्वरूपवर्णसंस्थानवचनव्याहारेण शाक्यमुनिं तथागतं पश्यन्ति धर्म्मं च शृण्वन्ति । यावच्चतु-रशीतिस्तत्र सत्त्वानां यथा संस्कारभक्तिरूपव्याहारसहस्राणि ते तथा चैव शाक्यमुनिं तथा-गतं पश्यन्ति धर्म्मं च शृण्वन्ति । तस्यां च पर्षदि स्वरगर्जितो नाम बोधिसत्त्वो द्वितीयश्च ज्योतिरश्मिर्नाम बोधिसत्त्वः ॥

अथ विमलगुणतेजराजस्तथागतस्तान् बोधिसत्त्वानामन्त्रयति स्म गच्छथ यूयं कुल-पुत्राः सहे लोकधातौ शाक्यमुनिं तथागतं सद्वचनादारोग्यकोऽल्पं सुखस्पर्शविहारतां परि-पृच्छथ । ते बोधिसत्त्वा आहुः सर्व्वावन्तं भगवन् सहं बुद्धक्षेत्रं च क्षितिगगनं बोधिसत्त्वैः स्फुटं समनुपश्यामः । न चाप्येकसत्त्वस्याप्यवकाशोऽस्ति क्षितौ गगने वा यत्र वयं प्रति-तिष्ठेम । स च विमलो गुणतेजराजस्तथागत आह । मा कुलपुत्रा एवं वदथ नास्ति सहे बुद्धक्षेत्रेऽवकाशः विस्तीर्णावकाशः स शाक्यमुनिस्तथागतोऽचिन्त्यैर्बुद्धगुणैः पूर्वप्रणिधानेन विस्तीर्णो तथागतस्य कृपाशासनावतारप्रवेशा त्रिशरणगमनं त्रियानधर्म्मदेशनामारभ्य धर्म्मं देशयति । त्रिविधं वः शिक्षासंवरं देशयति त्रीणि च विमोक्षद्वाराण्युपदर्शयति त्रिभ्यो-ऽपायेभ्यः सत्त्वानुद्धरति तिसृषु च शिक्षासु त्रिषु यानेषु प्रतिष्ठापयति । एकस्मिन्समये कुलपुत्र-शाक्यमुनिस्तथागतो चिराभिसम्बुद्धो वैनेयसत्त्वापेक्षया मध्ये शैलपर्वते इन्द्रशालस्य यक्षस्य भवने शालगुहायां विहरति सप्ताहमेकपर्य्यङ्केनातिनामयति विमुक्तिप्रीतिसुखं प्रतिसंवेद-यति सर्व्वावती च सा शालगुहा तथागतकायेन स्फुटा नास्ति तत्रावकाशोऽन्तशश्चतुरङ्गुल-

प्रभायां यत्तथागतकायेन न स्फुटं । तथा च सप्ताहस्यात्ययेन दशभिर्दिशाभिर्द्वादशनयुता बोधिसत्त्वानां तत्र सहे लोकधातौ यस्यां पर्वतस्याभिमुखं स्थित्वा शाक्यमुनेस्तथागतस्य वन्दनाय पर्युपासनाय धर्मश्रवणाय। स च कुलपुत्र शाक्यमुनिस्तथागतस्तत्र पर्षदि रि(ऋद्ध्य)भिसंस्कारमभिसंस्कृतवान् सा च शालगुहा एवं विस्तीर्णा चैवं विपुला च प्रादुर्भूता यदा ते द्वादशनयुता बोधिसत्त्वानां तत्र शालगुहायां प्रविष्टो विस्तीर्णावकाशं पश्यन्ति स्म । एकैकस्य बोधिसत्त्वस्य तथागतस्य विविधबोधिसत्त्वविकुर्वाणेन पूजां कृत्वा एकैको बोधिसत्त्वस्तत्र सप्तरत्नमयासनं निर्मितवान् यत्रोपविष्टा धर्मं शृण्वन्ति स्म । एवं विस्तीर्णावकाशः कुलपुत्र स शाक्यमुनिस्तथागतः ते च बोधिसत्त्वाः तस्य शाक्यमुनेस्तथागतस्य सकाशाद्धर्मं श्रुत्वा शाक्यमुनेस्तथागतस्य पादौ शिरसा वन्दित्वा त्रिष्कृत्वः प्रदक्षिणीकृत्य स्वकस्वकेषु बुद्धक्षेत्रेषु सम्प्रस्थिताः अचिरप्रक्रान्तानां च तेषां बोधिसत्त्वानां शालगुहा यथा पौराणा संस्थिता तत्र चातुर्द्वीपिकायां कौशिको नाम शक्र आयुःपरिक्षीणस्तिर्यग्योन्युपपत्तिभयभीतः स चतुरशीतिभिस्त्रयस्त्रिंशद्देवसहस्रैः सार्द्धं येन शालगुहा येन च भगवांस्तेनोपसंक्रामति । उपसंक्रम्य सामन्तके हन्द्रस्तस्य शालगुहाभवने स्थितः तस्य भगवताऽनुभावेन एतदभवत् यन्नूनं वयमहं पञ्चशिखं गन्धर्वपुत्रमध्येषेम । स च पञ्चशिखो मधुरेण स्वरेण भगवन्तमभिमुखं स्तविष्यति । तदा भगवान् ध्यानसमाधिभ्यो व्युत्थास्यति । ततः शक्रः पञ्चशिखं गन्धर्वपुत्रमधीष्टवान् ।

अथ पञ्चशिखो वीणां मनोज्ञेन गीतवादित्रेण भगवतोऽनुभावेन पञ्चभिस्तवशतैर्भगवतो वर्णमभाषत । यदा च कुलपुत्र पञ्चशिख आरब्धो भगवतोऽभिस्तवनाय ततः स शाक्यमुनिर्भगवान् सुघोषवैरोचनकेतुं नाम समाधिं समापन्नस्तेन समाधिना ये सहे लोकधातौ महर्द्धिकयक्ष-राक्षसा वासुरा वा गरुडा वा किन्नरा वा महोरगा वा गन्धर्वा सर्वे कामावचरा देवा सर्वे रूपावचरा देवपुत्रास्तत्र सन्निपाता बभूवु ये च स्वरभक्तिकास्ते स्वरं श्रुत्वा प्रसीदन्ति । ये वर्णयशोभक्तिका स्ते भगवतो वर्णं श्रुत्वा तस्य भगवतः सकाशे तीव्रप्रेमप्रसादगुरुगौरवचित्रीकारजाताः प्रसीदन्ति ये वेणुवाद्यभक्तिकास्ते वेणुवाद्यं श्रुत्वा प्रसीदन्ति ततः शाक्यमुनिर्भगवांस्ततः समाधेर्व्युत्थाय शालगुहाया द्वारं दर्शयामास शक्रश्चोपसंक्रान्तो भगवन्तं पृष्टवान् भगवान् कुत्रोपविश्रामः स शाक्यमुनिस्तथागत उवाच । निषीद त्वं यदा यावत्तस्युस्समागताः ततः शाले गुहा एवं विस्तीर्णा संस्थिता यथा द्वादशगङ्गानदी-वालिकासमा यदास्तत्र गुहायां प्रविष्टा निषण्णायाश्च तस्याः पर्षदः स शाक्यमुनिस्तथारूपां धर्मदेशनां कृतवान्यथा ये तस्मिन् पर्षदि श्रावकयानिका निषण्णास्ते श्रावकयानकथां शृण्वन्ति । नवनवतिकोट्यस्तत्र स्रोतापत्तिफलं प्राप्ताः ये च तत्र पर्षदि अनुत्तरसम्यक्सम्बुद्धयानिकास्ते शुद्धां महायानकथां शृण्वन्ति । तत्र च पञ्चशिखगन्धर्वपूर्वङ्गमा अष्टादशनयुता अवैवर्त्तिकाः संस्थाता अनुत्तरायां सम्यक्सम्बोधौ येष तत्रानुत्पादितं त्रिषु यानेषु चित्तं तत्र केचिदनुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादितं केचित्तत्र प्रत्येकबुद्धयाने चित्तमुत्पादितं केचिच्छ्रावकयाने चित्तमुत्पादितं स च तत्र कौशिकः शक्रो भयात्परिमुक्तो वर्षसहस्रं चायुर्विवृद्धं । अवैवर्त्तिकश्चानुत्तरायां सम्यक्सम्बोधौ बभूव तदेवं विस्तीर्णावकाशः

कुलपुत्र स शाक्यमुनिस्तथागतः एवं विस्तीर्णं चास्य तथागतस्य स्वरमण्डलं । न चितस्य तथागतस्य स्वरमण्डलस्य पर्यन्तमुद्ग्रहीतुं वा गणयितुं वा विस्तीर्णं तस्य पायकौशल्यं सत्त्वपरिपाकस्य न शक्यं तस्य तथागतस्योपायकौशल्यस्य विस्तीर्णकायस्य कुलपुत्र तथागतो न शक्यं केनचित्तस्य मूर्द्धानमवलोकयितुं कायस्य पर्यन्तमधिगन्तुं । यावन्तश्च सत्त्वा एतर्हि तत्र सर्वे बुद्धक्षेत्रे सन्निपतिता यदि ते सत्त्वाः शाक्यमुनेस्तथागतस्य कुक्षौ प्रविशेयुस्ते सर्वे तत्र विचरेयुस्ते च सत्त्वास्तस्य तथागतस्यैकरोममुखे प्रविशेयुः निष्क्रमेयुश्च ते एकरोममुखात्तस्य तथागतस्य नो शक्ताः पर्यन्तमुद्ग्रहीतुं जनलम्बा पूर्व्वस्याम्बान्तशो दिव्येनापि चक्षुषा तदेवं विस्तीर्णकायः स शाक्यमुनिस्तथागतः । पुनरपरं कुलपुत्र विस्तीर्णबुद्धक्षेत्रः स शाक्यमुनिस्तथागतो यावन्तश्च दशसु दिक्षु गङ्गा-नदी-वालिकासमा बुद्धक्षेत्रा एवं परिपूर्णा भवेयुः । सत्त्वैस्तस्यापि नामैतर्हि सर्वं बुद्धक्षेत्रं सर्व्वे ते सत्त्वा एतर्हि सहे बुद्धक्षेत्रे विशेयुः सर्व्वे ते तत्र विचरेयुः तत्कस्माद्धेतोः तथैव तस्य तथागतस्य पूर्वं प्रथमचित्तोत्पादेनानुत्तरायां सम्यक्सम्बोधौ प्रणिधानं बभूव । तिष्ठन्तु कुलपुत्रैकं गङ्गा-नदी-वालिकासमा लोकधातवः स चेत् कुलपुत्र यावद्दशसु दिक्षु सहस्रं गङ्गा-नदी-वालिकासमा बुद्धक्षेत्रा एवं विस्तीर्णाः तद्यथैतर्हि सहबुद्धे परिपूर्णं सत्त्वैः ते सर्वे एतर्हि सहे लोकधातौ प्रविशेयुस्ते सर्वे तत्र विचरेयुरेवं वयं । तस्य तथागतस्य पूर्वं प्रथमचित्तोत्पादितानुत्तरज्ञानप्रतिलाभाय प्रणिधानं बभूव । एवं विस्तीर्णबुद्धक्षेत्रः स कुलपुत्र शाक्यमुनिस्तथागतः । एभिश्च धर्मैर्विशिष्टतरः स शाक्यमुनिस्तथागतो यथावदुपस्थित पूर्वं कुलपुत्रा इमां चन्द्ररोचविमलां पुष्पाकृष्टाय परिणामो दिशं यथा स्वयं दृष्ट्वा सहं बुद्धक्षेत्रं मम वचनेन तं शाक्यमुनिं तथागतमारोग्यकौशल्यं पृच्छत ॥ स च विमलगुणतेजराजस्तथागतश्चन्द्ररोचविमला पुष्पाणि गृहीत्वा रत्नराजस्य बोधिसत्त्वस्य ज्योतिरश्मेश्च बोधिसत्त्वस्य दत्त्वाह । गच्छत कुलपुत्रा समर्धिबलाधानेन सहां लोकधातुं । तत्र विंशतिः प्रणिधनस्थाप्याङ्गुष्ठमपि भदन्त भगवन् गच्छेम तथानुभावेन सहां लोकधातुं तस्य शाक्यमुनेस्तथागतस्य दर्शनाय वन्दनाय पर्युपासनाय विमलगुणतेजराजस्तथागत आह । गच्छत कुलपुत्रा यथाभिप्रायाः । तौ च द्वौ बोधिसत्त्वौ रत्नराजश्च ज्योतिरश्मिश्च सार्द्धं विंशतिभिर्बोधिसत्त्वसहस्रैस्तस्य विमलगुणतेजराजस्य तथागतस्य प्रतिश्रवेण ततः संपुष्पिताया लोकधातोः सम्प्रस्थिता एकचित्तक्षणेनेदं सहं बुद्धक्षेत्रमनुप्राप्ता गृध्रकूटे पर्वते प्रत्यस्थुः ते येन भगवान् शाक्यमुनिस्तेनाञ्जलिं प्रणम्याहुः अस्ति भगवन् पुरस्तिमे दिग्भागे एकोनविंशतिबुद्धक्षेत्रसहस्राण्यतिक्रम्य तत्र संपुष्पितो नाम लोकधातुः तत्र विमलगुणतेजराजो नाम तथागतः स च पुनस्तथागतो बोधिसत्त्वगणपरिवारस्तथागतः पुष्पाणि प्रेषयति एवमाह शाक्यमुनिर्नाम तथागतः सहे बुद्धक्षेत्रे तिष्ठति यापयति तेन च तथागतेन पूर्वं बोधिसत्त्वभूतेन बोधिसत्त्वचारिकां चरमाणेनाहं सर्वप्रथममनुत्तरायां सम्यक्सम्बोधौ समादापितो निवेशितः प्रतिष्ठापितस्तस्य च वचनेन मयानुत्तरायां सम्यक्सम्बोधौ चित्तमुत्पादितं तेन तथागतेनाहं प्रथमं दानपारमितायां निवेशितो यावत्पूर्वोक्तं एवमेभिश्चतुर्भिर्धर्म्मैर्विशिष्टतरः स शाक्यमुनिस्तथागतो यथा तेनेमे चन्द्ररोचविमला पुष्पाः प्रेषिता आरोग्यकौशल्यं च पृच्छति ।

असमभिरथा बुद्धक्षेत्रात् अक्षोभ्यस्य तथागतस्यासनं कम्पति ये च तत्र बोधिसत्त्वाः सन्निपतितास्ते चापि दृष्ट्वाक्षोभ्यस्य तथागतस्यासनं कम्पितं परिपृच्छन्ति स्म। पेयालं यथा पूर्वोक्तं सर्वेषामेवं वक्तव्यं। तेन च समयेनाप्रमेयासंख्येयाः पुरिमायां दिशि तथागता दूता बोधिसत्त्वा इमं सहं बुद्धक्षेत्रं सह चन्द्ररोचविमलैः सम्प्राप्ताः शाक्यमुनेस्तथागतस्य परिपृच्छनाय पूजनाय वन्दनाय पर्युपासनाय धर्म्मश्रवणाय च। समनन्तरपरिवर्त्तितो भगवतः पुरिमायां दिशि बुद्धक्षेत्रनामपरिकीर्त्तनं बुद्धानां भगवतां। दक्षिणां दिशं पुनर्भगवानारब्धः परिकीर्त्तयितुं। यत्राप्यहं कुलपुत्र दक्षिणस्यान्दिशीतो बुद्धक्षेत्रादेकगङ्गा-नदीवालिकासमानि बुद्धक्षेत्राण्यतिक्रम्य तत्र सर्वशोकापगतो नाम लोकधातुस्तत्राशोकश्रीर्नाम तथागतस्तिष्ठति ध्रियति यापयति। मया च भगवान् सर्वप्रथमं पूर्वबोधिसत्त्वचारिका चरमाणेनानुत्तरायां सम्यक्सम्बोधौ यावद्यथापूर्वोक्तं जम्बुप्रभे बुद्धक्षेत्रे धर्म्मेश्वरविनर्दिर्नाम तथागतः मेरुप्रतिष्ठिते बुद्धक्षेत्रे शतोश्वरसालेन्द्रोनाम तथागतः गुणेन्द्रनिर्यूहे बुद्धक्षेत्रे सिंहविक्रीडितराजा नाम तथागतः। मणिमुक्तव्यूहे बुद्धक्षेत्रे नारायणविजितगर्भो नाम तथागतः। मुक्ताप्रभसत्त्वे बुद्धक्षेत्रे रत्नगुणविष्कम्भितसत्त्वो नाम तथागतः चैत्रसोमे बुद्धक्षेत्रे ज्योतिगर्भो नाम तथागतः चन्दनच्छत्रे बुद्धक्षेत्रे नक्षत्रविधानकीर्त्तिर्नाम तथागतः विशिष्टगन्धे बुद्धक्षेत्रे पुष्पबलमालराजा नाम तथागतः सुचिरिते बुद्धक्षेत्रे मनोज्ञघोषस्वरविनर्दितो नाम तथागतः दुरध्ये बुद्धक्षेत्रे सालजयविन्दुराजा नाम तथागतः सर्वघोषे बुद्धक्षेत्रे तेजेश्वरप्रभासो नाम तथागतः अभिगर्जितबुद्धक्षेत्रे सुमनोज्ञस्वरनिर्घोषो नाम तथागतः। रत्नविभवे बुद्धक्षेत्रे रत्नतलनागेन्द्रो नाम तथागतः पद्मामरत्नसुरते बुद्धक्षेत्रे धर्म्ममेघनिर्घोषेश्वरघोषो नाम तथागतः पेयालं यथापूर्वोक्तं। एवमप्रमेयासंख्येयानां बुद्धानां भगवतां दक्षिणस्यान्दिश्यासनानि कम्पन्ति। सर्व्वेऽपि बुद्धा भगवन्तः शाक्यमुनेस्तथागतस्य वर्णं यशःकीर्त्तिमुदीरयन्ति। यावत्तेन समयेनाप्रमेयासंख्येया दक्षिणस्यान्दिशि तथागतदूता बोधिसत्त्वाः सह चन्द्ररोचविमलैः पूर्व्वेरिमं सहं बुद्धक्षेत्रमनुप्राप्ताः शाक्यमुनेस्तथागतस्य पृच्छनाय यावद्धर्म्मश्रवणाय।

पुनश्च भगवानाह॥ यत्राप्यहं कुलपुत्र पश्चिमायां दिशीतो बुद्धक्षेत्रात् भवानप्रतिबुद्धक्षेत्रनयुतशतसहस्राण्यतिक्रम्य तत्र शान्तमतिर्नाम बुद्धक्षेत्रं तत्र रत्नगिरिर्नाम तथागतः तिष्ठति ध्रियति यापयति धर्म्मञ्च देशयति मया च भगवान् पूर्वं बोधिसत्त्वभूतेन बोधिचर्य्यां चरमाणेन सर्वप्रथमं समादापितो यावद्यथापूर्वोक्तं। बुद्धक्षेत्राणां पेयालं वरफलिकोशो* नाम तथागतः स्वरशोको‡ नाम तथागतः हरितालकीर्त्तिः समन्तगर्भः बलकुसुमः। कायधर्यविक्रमः पद्मेश्वरप्रदीपः अनन्तरमेकस्वरविघुष्टराजः ब्रह्मेन्द्रघोषः। यथापूर्वोक्तं। एवमप्रमेयासंख्येयानां पश्चिमायां बुद्धानां भगवतां येषां शाक्यमुनिना तथागतेन नामानि परिकीर्त्तितानि तेषामासनानि कम्पन्ति। यावत्तेन समयेनाप्रमेयासंख्येयाः पश्चिमायां दिशि बुद्धदूता बोधिसत्त्वाः सह चन्द्ररोचविमलैः पूर्व्वेरिमं सहं बुद्धक्षेत्रमनुप्राप्ता यावद्धिपश्या धर्म्मश्रवणाय। पेयालं। एवमुत्तरादिश्यत्त्वा एवमुपरिष्टायामेवमधः। एवं पूर्वदक्षिणा अधः दक्षिणपश्चिमा पश्चिमोत्तरा। एवमुत्तरपूर्वा। पुनः शाक्यमुनिर्भगवान्

* मकरध्वजकोषो नाम इति वा पाठः।

‡ चरघ्नकोशो नाम इति वा पाठः।

पश्चाद्यमितः कुलपुत्रोत्तरपश्चिमायां दिशीतो
व्यतिक्रम्य तत्र विजयं नाम बुद्धक्षेत्रं विगतसन्तापोद्भवश्रीगर्भमहाशालराजो नाम तथागतः पूर्वं बोधिसत्त्वभूतेन बोधिसत्त्वचर्यां चरमाणेन सर्वप्रथममनुत्तरायां सम्यक्सम्बोधौ स्थापितो यावत्षट्सु पारमितासु यावत्सर्वप्रथमं तिष्ठतां यापयतां बुद्धानां भगवतां सकाशमुपनी(नी)तो । यत्र तेन व्याकरणं प्रतिलब्धमनुत्तरायां सम्यक्सम्बोधौ यदा नाम परिकीर्तितं तदासनं कम्पितं यावच्चतुरशीतिसत्त्वानां धर्मभक्तिसंस्थानदर्शनाहारदर्शनानि तथा शाक्यमुनिं तथागतं पश्यन्ति धर्मं च शृण्वन्ति तत्र च पर्षदि द्वौ बोधिसत्त्वौ एकस्तथा शाक्यमुनिं तथागतं पश्यन्ति धर्मं च शृण्वन्ति तत्र च पर्षदि द्वौ बोधिसत्त्वौ एक विशेषपरिशाखरो नाम द्वितीयः संरोचनबुद्धो नाम स च विगतसन्तापोद्भवश्रीगर्भमहाशालराजो नाम तथागतस्तौ द्वौ बोधिसत्त्वौ आमन्त्रयित्वैवमाह । गच्छतं युवां कुलपुत्रौ सहे बुद्धक्षेत्रे मद्वचनाच्छाक्यमुनेस्तथागतस्यारोग्यकौशल्यं सुखस्पर्शविहारतां परिपृच्छता तावाकृ सर्वावन्तं भवन्तं भगवन्तानां* सहं बुद्धक्षेत्रं च क्षितिगगनं समनुपश्याम. स च तत्रैकस्य व्याप्तावकाशोऽस्ति क्षितौ वा गगने वा यत्रावां प्रतिष्ठेवहि स च तथागत आह । स कुलपुत्रैवं वदत नास्ति सहे बुद्धक्षेत्रेऽल्पावकाशः तत्कस्माद्धेतो विस्तीर्णावकाशः कुलपुत्र स शाक्यमुनिस्तथागतो ऽचिन्त्यैर्बुद्धगुणैः पूर्वप्रणिधानेन विस्तीर्णा तस्य तथागतस्य कृपा श्रावकप्रवेशः त्रिशरणगमनं त्रिभिर्यानैर्धर्मं देशयति त्रिविधं शिक्षासम्बरं देशयति त्रीणि विमोक्षद्वाराणि प्रकाशयति त्रिभ्यश्चापायेभ्यः सत्त्वानुद्धरति त्रिषु च श्रेयपथेषु सत्त्वान् प्रतिष्ठापयति । एकस्मिं समये कुलपुत्र स शाक्यमुनिस्तथागतोऽचिराभिसम्बुद्धो विनेयसत्त्वापेक्षया विषमे शैलेन्द्रपर्वतमध्ये इन्द्रशैलस्य यक्षस्य भवने शालगुहायां विहरति स्म सप्ताहमेकपर्यङ्केनातिनामयति स्म । विमुक्तिप्रीतिसुखसंवेदी । सर्वावती च सा शालगुहा स्फुटा तथागतकायेन नास्ति तत्रावकाशोऽन्ततश्चतुरङ्गुलप्रमाणं यन्न तथागतकायेन स्फुटं तस्य च सप्ताहस्यात्ययेन दशभ्यो दिग्भ्यः । द्वादशनयुता बोधिसत्त्वानां महासत्त्वानां सर्वलोकधातौ सन्निपातास्य शाक्यमुनेस्तथागतस्य वन्दनाय यावद्विविधैस्तुभिर्धर्मं विशिष्टतरः ।

स शाक्यमुनिस्तथागतो यथान्ये तथागता एहीश्वं यूयं कुलपुत्रा इमां चन्द्ररोचविमलपुष्पां गृहीत्वा गच्छत पश्चिमां दिशं यथा स्वयं दृष्ट्वा तं बुद्धक्षेत्रं मम वचनात्तस्य शाक्यमुनेस्तथागतस्यारोग्यकौशल्यं पृच्छत । स च विगतसन्तापोद्भवश्रीगर्भमहाशालराजस्तथागतः पुष्पं गृहीत्वा विशेषपरिशाखरस्य बोधिसत्त्वस्य ददाति संरोचनबुद्धस्य च बोधिसत्त्वस्य महासत्त्वस्य । एवं चाह । गच्छत कुलपुत्रौ सर्वार्हत्त्वलाधानेन सहं बुद्धक्षेत्रं तत्र विंशति प्राणसहस्राण्याहुः । वयमपि भगवन् गमिष्यामस्तथागतस्यानुभावेन सहं बुद्धक्षेत्रं शाक्यमुनिं तथागतं दर्शनाय वन्दनाय पर्युपासनाय । तथागत आह । गच्छत कुलपुत्रा यथाभिप्रायाः । ततस्तौ द्वौ बोधिसत्त्वौ सार्द्धं विंशतिभिर्बोधिसत्त्वसहस्रैस्तस्य तथागतस्य द्धि(स्त)ध्यनुभावेना ततो विजराद्† बुद्धक्षेत्रात् समाश्रिताः एकचर्यानेव बुद्धक्षेत्रेऽनुप्राप्ता गृध्रकूटे पर्वते प्रत्यस्थुः । एकान्तस्थिताश्च येन शाक्यमुनिस्तथागतस्तेनाञ्जलिं प्रणम्याहुः

---

* भगवतामिति पाठः साधु । † ऋद्ध्यनुभावेन इति पाठः साधुः । ‡ विरजाद् इति पाठ साधुः

सर्व्वलोकधात्वनुगमनसन्नाहः । मायास्वप्नप्रतिभासोपमसर्वधर्म्मावबुध्यमानतया आमनालङ्कारसन्नाहः । शीलस्कन्धाधिष्ठानपरिशुद्धा दश [illegible] सर्व्वपारमितापरिपूर्ण्या चतुर्वैशारद्यप्रतिलाभसन्नाहः । यथावादितथाकारितया वेणिकबुद्धधर्म्मनिरवशेषप्रतिलाभसन्नाहः बोधिसत्त्वानां [illegible] येयं दशप्रकाराणि वेशधर्म्ममुखचर्य्या । अलक्षणासुखपरिज्ञागतिचर्य्यायाः सर्व्वधर्म्मनैरात्म्य मनभिकारचित्तानुत्पादानिरोधसमयप्रवेशवर्त्तिकभूमियंत्र समस्तंविवरैरनुत्क्षेप[illegible] निर्मममस्य खलु पुनर्धर्म्मपर्य्यायस्य भाष्यमाणस्याशीतिकोटी गङ्गा-नदी-वालिकासम सत्त्वास्तथागतस्य कुक्षिगता अवैवर्त्तिका अभूवन्ननुत्तरायां सम्यक्सम्बोधौ । गङ्गानदि कान्तास्र तत्र बोधिसत्त्वा महासत्त्वा ये नानाविधधारणीक्षान्तिप्रतिलब्धा अभूवन् सर्व्वे पुनस्तथागतशरीराद्रोममुखेभ्यो निष्क्रान्ता आश्चर्य्यप्राप्ता भगवतः पादौ वन्दित्वा स्वकेषु प्रक्रान्ताः स्वकस्वकेषु बुद्धक्षेत्रेषु गतास्तथागतस्य स्वरमण्डलकायप्रमाणप्रापणार्थं । तत्र बोधिसत्त्वाः पुरिमां दिशं गच्छन्ति अप्रमेया संख्येयाः पुरिमायां दिशि यद्बुद्धक्षेत्राणि क्रामन्ति न च शाक्यमुनेस्तथागतस्य स्वरमण्डलं प्रतिहन्यते । एवं च तत्र स्वरं शृण्वन्ति विचित्रपदार्थव्यञ्जनाः तद्यथा शाक्यमुनेस्तथागतस्य पुरतो निषण्णै धर्म्मः श्रुतः । एवमेवात्र धर्म्मं शृण्वन्ति । अपि च तत्रापि शाक्यमुनेस्तथागतस्य कायस्योनत्वं वा पूर्णत्वं वा । प्रज्ञायते शाक्यमुनेस्तथागतस्य कायः स्फुटो दृश्यते बोधिसत्त्वैः शतकेशाप्रमेया संख्येय बोधिसत्त्वा' शतकायैकरोममुखे शाक्यमुनेस्तथागतस्य प्रविशन्तो निष्क्रामन्तश्च संदृश्यन्ते । एव द्वितीये रोममुखे यावत्सर्व्वरोममुखेभ्यः प्रविशन्तो निष्क्रामन्तश्च संदृश्यन्ते यावदेवं दश दिशु वक्तव्यं सर्व्वापरी च सापर्षो यावद्गगन' कायान्तर्गताः सा भगवतः कायान्तर्गत रोममुखेभ्यो निष्क्रम्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तं त्रिष्प्रदक्षिणीकृत्वा भगवतो ऽभिमुखं प्रत्यष्ठाद्भगवन्तमेव विचित्रार्थपदव्यञ्जनकल्याणाहारैः स्तवमाना ।

अथ तावदेव कामावचरा रूपावचराश्च देवपुत्रा विचित्रैश्च गन्धमाल्यविलेपनचूर्णै प्रवर्षिता दिव्यानि च पुष्पाणि प्रवादितवन्तो दिव्यानि च छत्रध्वजपताकावस्त्रभूषाभरणानि भगवतः पूजायोद्युक्ताः । तत्र वैशारद्यसमुद्घाटिनाम बोधिसत्त्वो येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत् किं नामायं भदन्त भगवन् महाव्याकरणं गृह्णाम । भगवानाह सर्व्वशलाकाधारणीमुखप्रवेशो नाम बहुबुद्धकं नाम बहुसन्निपातं नाम बोधिसत्त्वव्याकरण नाम वैशारद्यमार्गोत्तारणं नाम समाधानकल्याणतरणो नाम बुद्धक्षेत्रसन्दर्शनो नाम सागरो धर्मो नाम गहनातिक्रान्तो नाम करुणापुण्डरीको नाम । पुनरप्याह । कियन्तं भदन्त भगवन् कुलपुत्रो वा कुलदुहिता वा पुण्यस्कन्धं प्रसविष्यति । य इमं धर्म्मपर्य्यायं श्रोष्यति उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति परेभ्यो च विस्तरेण सम्प्रकाशयिष्यति लिखिष्यति लिखापयिष्यति अन्तश एकगाथामपि । आह पूर्व्वं च मयोक्तमिह पुण्यस्कन्धं संक्षेपेणेदानीं कथयिष्यामि । यः कश्चिदिमं धर्म्मपर्य्यायं श्रोष्यति उद्ग्रहीष्यति धारयिष्यति वाचयिष्यति परेभ्यश्च विस्तरेण सम्प्रकाशयिष्यति अन्तश एकगाथामपि । यश्च पुनः पश्चिमायां पश्चात्प्राप्तमन्तशो लिखित्वा धारयिष्यति । स बहुतरं पुण्यस्कन्धं प्रसविष्यति । स

स्यैवं षोडश महाकल्पान् षट्पारमिताचरमाणस्य बोधिसत्त्वस्य पुण्यस्कन्धः । तत्कस्माद्धेतोः सदेवकस्य लोकस्य समारकस्य सब्रह्मकस्य सश्रमणब्राह्मणिकायाः प्रजायाः सदेवनागगन्धर्वकुम्भाण्डप्रेतपिशाचकिन्नरासुराणां दुष्टचित्तानां प्रसादनः सर्व्वरोगाणां प्रशमनः सर्व्वकलिकलहविग्रहविवादव्युपशमनः सर्व्ववाताकालमरणरोगप्रशमनः सर्व्वदुर्भिक्षप्रशमनकरः क्षेमकरणीयः सुभिक्षकर आरोग्यसामग्रीकरः भीतानामभयसुखकरः क्लेशव्युपशमनकरः कुशलमूलविशुद्धिकरः अपायदुःखप्रमोचनकरस्त्रिभिर्यानैर्मार्गसन्दर्शनकरः समाधिधारणीक्षान्तिप्रतिलाभकरः सर्व्वसत्त्वानामुपजीवकरो वज्रासननिषीदनकरः । चतुर्मारधर्षणकरो बोधिपक्षाभिसम्बुध्यनकरो धर्म्मचक्रप्रवर्त्तनकरः आर्य्यसप्तधनविरहितानां सत्त्वानां बोधिपक्षवृद्धिकरः अभयपुरनगरप्रवेशकरणार्थं मया धर्म्मपर्य्यायो भाषितः कस्य हस्ते इमं धर्म्मपर्य्यायं परिन्दामिको ममेमं धर्म्मपर्य्यायं पश्चिमायां पञ्चाशत्यां रक्षिष्यति । अधर्म्मभूयिष्ठानां सत्त्वानां भिन्नशीलानां च भिक्षूणां कर्णपुटे प्रकाशयिष्यति । अधर्म्मरागारक्तानां विषमलोभाभिभूतानां मिथ्याधर्म्मपरिचितानां । अपरिपक्वचित्तानां संवेजयिष्यति । सर्व्वावती च सापर्षा-भगवतश्चेतसा चित्तमाज्ञाय तत्र पर्षदि मेरुपुष्पो नाम यक्षऋषिर्निषण्णः ।

अथ मैत्रेयो बोधिसत्त्वो महासत्त्वस्तं मेरुपुष्पं यक्षऋषिं गृहीत्वा भगवतः सकाशमुपनीतवान् । भगवानाह । उद्गृहाण त्वं महर्षे इमं पर्य्यायं यावत्पश्चिमायां पञ्चाशत्या देशान्तरगतानामवैवर्त्तिकानां बोधिसत्त्वानां कर्णपुटेषु प्रकाशय । अयं चावैवर्त्तिकचित्तं सन्नुमस्यादेयं भदन्त भगवंश्चतुरशीतिप्रदा कल्पा अतिक्रामन्तो यन्मया भदन्त भगवन् पूर्व्वं प्रणिधानेन यत्र ऽविस्तारयस्त्रानुत्तरायां* सम्यक्सम्बोधौ बोधिचारिका चरमाणोऽतिक्रान्तः । सत्त्वा मया चतुर्षु ब्राह्मविहारेषु प्रतिष्ठापिताः अवैवर्त्तिकभूमौ च प्रतिष्ठापिता अहं च सत्त्वानां स्वयमेव परिपाचयामि । यावत्पश्चिमायां पञ्चाशत्यां इमं धर्म्मपर्य्यायमुद्प्रदीप्यति यावच्च य इतश्चतुष्पादिकामपि गाथां धारयिष्यति ॥ इदमवोचद्भगवानात्तमनाः सर्व्वावतीपर्षत् सदेवमानुषासुरश्च लोको भगवतो भाषितमभ्यनन्दन्निति ॥

इति करुणापुण्डरीकं नाम महायानसूत्रं समाप्तम् ॥

शुभमस्तु ॥

---

* मूले तारदृढानुर्व्वानुत्तरायां इति पाठो दृश्यते स तु सन्दिग्धतया प्रतिभाति ।

# उपसंहृतिः ।

श्रुत्युक्ते वैधकर्म्मादौ नराः पण्डितमानिनः ।
अन्वहं वासनामूलं वाञ्छन्ति त्रिदशालयम् ॥

निरागसः पशून् घ्नन्ति यागादौ धर्म्मलिप्सया ।
न विरज्यन्ति संसाराज्जरां मृत्युं विलोक्य च ॥

एवमकार्य्यं चरतां सन्तप्तानां निरन्तरम् ।
त्राणार्थमाविरासीत् स भगवान् पृथिवीतले ॥

शाक्यराजकुले जातः पुरे कपिलवस्तुनि ।
परिवव्राज लोकानां शिवार्थं यौवने स्वयम् ॥

सार्द्धद्वादशसाहस्रशिष्यैरन्वहमन्वितः ।
चकार गृध्रकूटादिशैलेषु धर्म्मदेशनाम् ॥

तस्मिन्निर्वाणमापन्ने तच्छिष्यैर्धर्म्मकोविदैः ।
प्रज्वालिता धर्म्ममया दीपास्तिमिरशान्तये ॥

कालक्रमेण ते दीपाः चेहचेकं विना पुनः ।
शैलानिलैस्तु निर्व्वाणा दक्षिणस्या दिशस्ततः ॥

तेषां शास्त्राणि विज्ञातुमुत्सुकाः शिक्षिताः सदा ।
तस्माद्बौद्धागमानाञ्च प्रचाराय सचेतसा ॥

श्रीशरच्चन्द्रदासेन सद्वैद्यकुलजेन वै ।
दुर्गमं तुहिनैस्तावत् हिमवच्छिखरस्थितम् ॥

तिब्बतं देशमासाद्य कृत्वा धर्म्मपुरोहितैः ।
मैत्रीं तेभ्यः समानीता बौद्धग्रन्थाश्च भूरिशः ॥

कलिकाताराजधान्यां सुधियां हितकाम्यया ।
समितिः स्थापिता तेन बौद्धशास्त्रप्रकाशिका ॥

वङ्गेशः कृपया तत्र वार्षिकं वित्तमादिशम् ।
लेभे कृतज्ञतापुण्यं सर्व्वेषां विदुषां भुवि ॥

सदस्या बहवस्तत्र विद्वांसः प्रज्ञवित्तमाः ।
पाश्चात्यानाञ्च विदुषां सभेयं प्रीतिदायिनी ॥
जाह्नव्याः पश्चिमे तीरे नवद्वीप-इतिश्रुते ।
स्थाने कृतनिवासोऽस्मि वङ्गविप्रकुलोद्भवः ॥
श्रीशरच्चन्द्रशर्माहमधीत्य देवभारतीम् ।
आबाल्याद्वङ्गभूमौ च वाराणस्याञ्च यत्नतः ॥
अध्यापकानां कृपया तेषां चैव निदेशतः ।
कलिकाताराजधान्यां तथैव पुण्यपत्तने ॥
कृतोद्यमः परीक्षायां ततः पूर्णमनोरथः ।
पुरस्कारेण सहितं प्रतिष्ठापत्रमाप्तवान् ॥
विद्यालयेष्वथो कञ्चित् कालमध्याप्य यत्नतः ।
पर्य्यटम् विविधान् देशान् जम्बूद्वीपे मनोरमे ॥
इदानीमनुरुद्धोऽहं ग्रन्थसम्पादनेष्विह ।
आदौ माध्यमिकावृत्तिर्मया सम्पादिता पुनः ॥
बोधिसत्त्वस्य चरितं पवित्रं धर्मलक्षितम् ।
करुणापुण्डरीकाख्यं ग्रन्थं सम्पादयाम्यहम् ॥
विद्वद्भिरत्र लक्ष्येत प्रमादश्चेत् भ्रमोऽथ वा ।
संशोधयन्तु कृपया सन्नतिः प्रार्थये बुधान् ॥
ख्रष्टाब्देऽद्रिपद्ये चेन्द्रे *मासि फर्वरीसंज्ञके । *१८९८ ख्रः
करुणापुण्डरीकाख्योग्रन्थोऽयं मुद्रितस्त्विह ॥

इति शास्त्री इत्युपनामकेन श्रीशरच्चन्द्रशर्म्मणा सम्पादितं
करुणापुण्डरीकम् नाम महायानसूत्रं
समाप्तम् ॥

---

